॥ श्रीः ॥

॥ श्रीहयग्रीवाय नमः ॥

# सत्प्रतिपक्षविभाजकपत्रम् ।

( श्रीशैलानन्तपूरुषकुलतिलकयादवाद्रिनिवासि श्रीमदनन्ताचार्य[illegible]
शतकोटिखण्डनम् । )



यस्य श्रीनखकान्तिनाऽन्वमितः कूर्मायितेऽङ्घ्रिद्वयं
सोपानप्रसुनेन्द्रवक्षमकुट्टिमालः [illegible]
पश्यान्निर्झरयोपि[illegible]कतातिर्नीलप्रपञ्चागते
श्रोणी[illegible]जलधः पयोजमुकुल[illegible]न्यात्म [illegible]

— (*) —

प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृत[illegible] -
च्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपित[illegible]
कतावच्छेदिका सतीत्यादि । अत्र प्रतिबन्धकतावच्छेदकत्वं न [illegible]
रूपम् , सत्प्रतिपक्षोन्नायकेऽतिव्याप्तेरवारणात् ; वह्न्यभाव[illegible]
वह्न्यभाववान्वह्न्यभावव्याप्यव्याप्यवांश्च ह्रद इति निश्चययो[illegible]
परत्वेन प्रतिबन्धकतया तादृशप्रतिबन्धकतावच्छेदकत्वस्य वह्न्य[illegible]
व्याप्यवत्त्वावच्छिन्नविषयतायामक्षतत्वात् । एवं वह्न्यभावव्याप्य[illegible]
नह्रदो महानसीयवह्निमानित्यादौ वह्न्यभावव्याप्यमहानसीयवह्न्यभाव[illegible]
तादृशह्रद इति ज्ञानविषये महानसीयवह्न्यभाववत्तादृशह्रद[illegible]
व्याप्तिवारणायानतिरिक्तवृत्तित्वरूपं जनकतावच्छेदकत्वं निवेशनीयम् । [illegible]
चाव्यापकविषयताशून्यत्वेन तादृशज्ञानवारणसम्भवः, वह्नि[illegible]
व्याप्यमहानसीयवह्न्यभावरूपविशिष्टाप्रसिध्या तादृशविशिष्टविषय[illegible]

अव्यापकत्वासम्भवात्, वह्न्यभावव्याप्यवत्त्वेन ...
पक्षघटितबाधविषयताव्यापकत्वात् । यद्धर्मावच्छिन्नप्रतिबध्यतानिरूपित
प्रतिबन्धकत्वं सत्यन्तार्थः— तद्धर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता
निवेशेनैव तत्रातिव्याप्तिवारणेऽप्यभावव्यापकीभूताभावप्रतियोगिकालीनह्रदः
प्रमेयाभाववानित्यादौ प्रमेयाभावव्यापकीभूताभावप्रतियोगिप्रमेयवान् तादृश
ह्रद इति ज्ञानमादाय प्रमेयवत्तादृशह्रदरूपबाधेऽतिव्याप्तिर्बोध्या, प्रमेयाभा-
वत्वस्याभावव्यापकीभूताभावप्रतियोगिप्रमेयत्वस्य चाप्रसिध्या यद्रूपपदेन
तयोरुपादातुमशक्यत्वात्—अन्येषां च तादृशबाधघटकत्वात् । एवं चाना
हार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयित्व —
व्यापकं तादृशप्रतिबन्धकत्वजनकत्वोभयं तद्रूपावच्छिन्नत्वमिति फलितम् ।
अत्र चानाहार्यत्वमव्यवहितोत्तरक्षणावच्छिन्नसामानाधिकरण्यसम्बन्धेन
इच्छावदन्यत्वम् । यादृशदोषविषयकनिश्चयसामान्यं स्वसमानाधिकरणेच्छा
व्यवहितोत्तरवृत्ति तादृशदोषस्य प्रामाणिकत्वे जन्यतासम्बन्धेनेच्छावदन्यत्व
मेव तत्, आहार्यज्ञाने इच्छाया हेतुत्वोपगमात् न तस्य तथात्वम् ।
सिद्धिकालीनानुमितौ इच्छाया न हेतुत्वम्, किन्तु सिद्धिप्रतिबन्धकतायामुत्ते
जकत्वमेव । जन्यतासम्बन्धेनेच्छावदन्यत्वं च स्वनिरूपितजन्यतावच्छेदक
विषयितासम्बन्धावच्छिन्नेच्छात्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेद —
वत्वम्, तेन जन्यज्ञानसामान्यस्य ईश्वरेच्छाजन्यत्वेऽपि न क्षतिः । अप्रा
माण्यज्ञानानास्कन्दितत्वं च विषयत्वसामानाधिकरण्यकालिकविशेषणत्वै—
तत्त्रितयसम्बन्धेन भ्रमविशिष्टान्यत्वम्, न तूक्तत्रितयसम्बन्धेन ज्ञानविशि -
ष्टान्यत्वम्, सर्वज्ञानं गुणभिन्नं मेयत्वादित्यादौ गुणत्वव्याप्यवत्सर्वज्ञानत्वा
वच्छिन्नात्मकसत्प्रतिपक्षेऽव्याप्तेः, तत्र सत्प्रतिपक्षज्ञानस्योक्तत्रितयसम्ब—
न्धेन स्वात्मकज्ञानविशिष्टत्वात् । सम्बन्धकोटौ स्वाभिन्नत्वस्यापि निवेशे
स्वांशेऽप्रामाण्यावगाहिज्ञानाव्यावृत्तेः ।

यत्तु तत्र सर्वज्ञानत्वेन स्वभिन्नज्ञानमात्रावगाहिसत्प्रतिपक्षनिश्चय
मादायैव लक्षणसमन्वय इति; तन्न, किञ्चिद्धर्मावच्छिन्नविशेषणतापन्नसर्वत्वा
वच्छिन्नविशेष्यकज्ञानस्य कतिपयवस्तुविषयकत्वासम्भवस्य प्रतिज्ञाग्रन्थे

गादाधर्यामेवोक्तत्वात् । यदपि अव्यापकविषयिताशून्यत्वविशेषण... ग्रहात्मकनिरुक्तसत्प्रतिपक्षवारणसम्भवात् स्वभिन्नत्वस्य ... निवेशेऽपि न क्षतिरिति; तन्न, अप्रमात्वविशिष्टज्ञानकालीनहृदादि... सत्प्रतिपक्षाव्याप्तेः ; तत्राप्रामाण्यवज्ज्ञानत्वावच्छिन्नविषयताया अ... सम्भवेन स्वांशे अप्रामाण्यावगाहिज्ञानाव्यावृत्तेः । तस्मादुक्त... भ्रमविशिष्टान्यत्वमेव अप्रामाण्यज्ञानानास्कन्दितत्वम् । भ्रमत्वं न ... निष्ठविशेष्यतानिरूपितत्वस्वप्रतियोगिनिष्ठत्वस्वावच्छिन्नत्वैतन्... सम्बन्धविशिष्टान्यप्रकारताशालित्वमनुगतं हेतुग्रन्थे निरुक्तम् ... बन्धकतानिरूपिप्रतिबध्यतावच्छेदकत्व — सामानाधिकरण्यो... विषयिताविशिष्टविषयिताशून्यज्ञानत्वं निश्चयत्वम् , तेन कोटिद्वय... कोटिद्वयप्रकारकस्य एककोटिविशेष्यकापरकोटिप्रकारकस्य च ... गान्याभावव्यवस्थापनादावुक्तस्यापि व्यावृत्तिः ॥

यत्तु प्रकारितान्तरावच्छिन्नप्रकारिताशून्यत्वे सति विशेष्यितान्तरा- वच्छिन्नविशेष्यिताशून्यत्वमेव निश्चयत्वम् , कोटिद्वयप्रकारकसंशयीयकोटि- द्वयीयप्रकारितयोः कोटिद्वयविशेष्यकसंशयीयविशेष्यितयोश्चावच्छेद्यावच्छे- दकभावस्वीकारादिति । तन्न, ययोर्विषयतयोर्निरूप्यनिरूपकभावस्तादृश- विषयितयोरवच्छेद्यावच्छेदकभावस्य नियतत्वेन वह्न्यभावव्याप्यवान् ... इति ज्ञानीयवह्निविषयित्वाभावविषयित्वयोरवच्छेद्यावच्छेदकभावस्य... तादृशज्ञाने प्रकारितान्तरावच्छिन्नप्रकारिताशून्यत्वासम्भवेनासम्भवात् ... रितात्वेनावच्छेद्यावच्छेदकभावनिवेशेऽपि विशिष्टवैशिष्ट्यावगाहि... षणतावच्छेदकस्य धर्मिपारतन्त्र्येण धर्मिणि प्रकारतया ... वच्छिन्नापरप्रकारितासत्त्वेन तादृशज्ञानस्यलक्षणाघटकत्वेनासम्भवतन्... विशिष्टवैशिष्ट्यावगाहिज्ञानस्यैव जनकत्वेन तादृशज्ञानमादायैव ... समन्वेतव्यत्वात् । तत्रावच्छेद्यावच्छेदकभावास्वीकारे पक्षे ... व्याप्तिं विशेष्ये विशेषणमिति रीत्या वह्न्यभावव्याप्यं चावगाहमाना... लम्बनात्मकज्ञानाद्व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानस्य वैलक्षण्यानुपपत्तेः ।

न च तादृशज्ञानयोर्वैलक्षण्यनिर्वाहाय प्रकारतयोरवच्छेद्यावच्छेदकभावः-न तु प्रकारितयोरिति वाच्यम्,-विनिगमनाविरहेण प्रकारितयोरप्यवच्छेद्यावच्छेदकभावसिद्धेः । स्वनिरूपकतानवच्छेदकधर्मावच्छिन्नानिरूपितत्वस्वावच्छिन्नत्वोभयसम्बन्धेन प्रकारिताविशिष्टप्रकारिताशून्यत्वं निश्चयत्वमिति विलक्षणेनोक्तदोषवारणेऽपि ह्रदो वह्न्यभावव्याप्यवान् ह्रदे वह्न्यभावव्याप्यो नास्तीत्याकारकस्यैककोटिप्रकारकापरकोटिविशेष्यकस्य सामान्याभावव्यवस्थापनोक्तसंशयस्याऽव्यावृत्तेः । वस्तुतस्तु स्वावच्छिन्नविरोध्यनुमितिजनकतावच्छेदकविषयितावत्त्व — स्वप्रतियोग्युपहितत्वोभयसम्बन्धेनाभावविशिष्टान्यत्वमेवाप्रामाण्यज्ञानाभावादिविशिष्टत्वम्,न तु स्वावच्छिन्नप्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयितावत्त्व-स्वप्रतियोग्युपहितत्वोभयसम्बन्धेनाभावविशिष्टान्यत्वम्, तथा सति सामानाधिकरण्यांशे अप्रामाण्यज्ञानास्कन्दितस्य व्यापकसामानाधिकरण्यघटितसत्प्रतिपक्षनिश्चयस्याव्यावृत्तया तत्राव्याप्तेः, तादृशज्ञाने विरोध्यनुमितिजनकताविरहात् । न च प्रतिबन्धकतायां प्रकृतानुमितिनिरूपितत्वमनिवेश्यस्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयितावत्त्वघटितोभयसम्बन्धेनाभावविशिष्टान्यत्वनिवेशान्नोक्ताव्याप्तिः, सामानाधिकरण्यांशेऽप्रामाण्यज्ञानस्य प्रकृतानुमितिप्रतिबन्धकतावच्छेदकाभावप्रतियोगित्वविरहेऽपि सामानाधिकरण्याभाववत्ताबुद्धिप्रतिबन्धकतावच्छेदकाभावप्रतियोगित्वानपायादिति वाच्यम्,-तथा सति अव्याप्यवृत्तित्वज्ञानस्योत्तेजकतामतेऽव्याप्यवृत्तिघटाभाववद्भूतलकालीनह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यवत्तादृशह्रदरूपसत्प्रतिपक्षाव्याप्तेः, तत्र सत्प्रतिपक्षविषयकनिश्चयसामान्यस्य घटाभावत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूताभावप्रतियोग्युपहिततयोक्तोभयसम्बन्धेनाभावविशिष्टान्यस्य तादृशसत्प्रतिपक्षनिश्चयाप्रसिद्धेः । एवं सामान्यमुखव्याप्तिस्थलीयानुमितौ तत्तत्साधनधर्मिकतत्तत्साध्यनिरूपितव्याप्तिग्रहाभावाविशिष्टतत्तत्साध्यसाधनोपस्थितेः प्रतिबन्धकतायास्सिद्धान्तलक्षणादौ उक्तत्वेन संयोगसामान्याभावव्याप्यसंयोगाय

सत्प्रतिपक्षाव्याप्तेः, स्वावच्छिन्नप्रतिबन्धकतावच्छेदकीभूतसाध्यसाधन विषयित्वस्वप्रतियोगिभूतव्याप्तिग्रहोपहितत्वोभयसम्बन्धेनाभावविशिष्टतया-तदन्यतादृशसत्प्रतिपक्षनिश्चयाप्रसिद्धेः । प्रकृतानुमितिप्रतिबन्धकतानि-वेशेऽपि सिद्धघटकालीनेष्टसाधनघटकालीनह्रदो वह्निमानित्यादौ स-त्प्रतिपक्षाव्याप्तेः, सिद्धत्वज्ञानाभावविशिष्टेष्टसाधनताज्ञानादिघटितसामग्र्या अनुमितिप्रतिबन्धकत्वात् । तस्मात्स्वावच्छिन्नजनकतावच्छेदकवि-षयितावत्त्वघटितोभयसम्बन्धेनाभावविशिष्टान्यत्वमेव निवेशनीयम् ।

एतेनोक्तसत्प्रतिपक्षलक्षणस्य वह्न्यभाववह्न्यभावव्याप्यव्याप्योभय-वद्ध्रदेऽतिव्याप्तिरिति शङ्का निरस्ता, स्वावच्छिन्नजनकतावच्छेदकविषय तावत्त्वघटितोभयसम्बन्धेनाभावविशिष्टान्यत्वस्य वह्न्यभाववद्ध्रदांशेऽप्रामा-ण्यज्ञानास्कन्दितेऽप्युक्तोभयवद्ध्रदविषयकनिश्चये सत्त्वेन तत्र प्रतिबन्धकत्वा भावेनातिव्याप्त्यप्रसक्तेः ।

अथ समानबललक्षणेऽप्रामाण्यग्रहाभावस्य स्वातन्त्र्येणानुमिति हेतुतापक्षस्योक्तत्वेन तत्पक्षे स्वावच्छिन्नजनकतावच्छेदकविषयितावत्त्वघ-टितोभयसम्बन्धेनाभावविशिष्टान्यत्वस्य ज्ञाने निवेशासम्भवात् प्रतिबन्धकता घटितोभयसम्बन्धेनाभावविशिष्टान्यत्वमगत्या निवेशनीयम्, तत्पक्षसाधा-रण्यानुरोधात्, सामानाधिकरण्यांशेऽप्रामाण्यज्ञानादेश्च तत्तद्व्यक्तित्वा-वच्छिन्नाभावा निवेशनीयाः, तथा चोक्तोभयवद्ध्रदेऽतिव्याप्तिरिति चेन्न; तथापि वह्न्यभावव्याप्यव्याप्यांशेऽप्रामाण्यग्रहास्कन्दितोक्तनिश्चयस्यापि-लक्षणघटकत्वेन तत्राप्रामाण्यग्रहस्योत्तेजकतापक्षे जनकताविरहेण वह्न्यभा वव्याप्यव्याप्यांशे संशयात्मकज्ञानस्यापि संग्रहेण तत्र पक्षद्वये जनकता विरहेणातिव्याप्त्यप्रसक्तेः ।

वस्तुतस्तु अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्ट-तत्पावच्छिन्नविषयिताव्यापकत्वस्य प्रतिबन्धकत्वजनकत्वोभयस्मिन्निवेशे

यादृशस्थलविशेषे प्रतिबन्धकीभूतज्ञानं साध्याभावव्याप्यजलत्वादिना—घटाद्यवगाह्येव साध्याभावव्याप्यविशिष्टपक्षादिज्ञानं संशयादिरूपमेव तत्रा-नाहार्याप्रामाण्यज्ञानानास्कन्दितयद्रूपावच्छिन्नविषयिकनिश्चयाप्रसिद्ध्या —ऽव्याप्तिरिति केवलयद्रूपावच्छिन्नविषयिताव्यापकत्वमेव प्रतिबन्धकत्वजनक-त्वोभयस्मिन्निवेश्य परिष्कर्तव्यम्, व्यापकताघटकसम्बन्धश्च स्वावच्छेदका भावप्रतियोग्युपहितत्व-स्वाश्रयत्वान्यतरसम्बन्ध इति नासम्भवः। न चैवं पर्वतो वह्निमानित्यादौ अप्रामाण्यवत्सत्प्रतिपक्षभ्रमेऽतिव्याप्तिः, तत्राप्रामाण्य प्रकारकतादृशज्ञानाविशेष्यकज्ञानसामान्ये स्वावच्छेदकाभावप्रतियोग्युपहित त्वसम्बन्धेन प्रतिबन्धकत्वजनकत्वोभयसत्त्वादिति वाच्यम्,-अहार्यज्ञानेऽपि निरुक्ताप्रामाण्यवज्ज्ञानत्वावच्छिन्नविषयितासत्त्वेन तत्रोक्तसम्बन्धेन प्रति—बन्धकताविरहात्; अनाहार्यज्ञानस्यैव प्रतिबन्धकतावच्छेदकाभावप्रति—योगित्वात्, अप्रामाण्यज्ञानगताहार्यत्वस्य च सत्प्रतिपक्षज्ञानप्रतिबन्धकता वच्छेदकाभावप्रतियोग्युपहितत्वविरहात्। लक्षणे तथैव निवेश्यत्वात्। न चाप्रामाण्यग्रहधर्मिकाप्रामाण्यग्रहकालीनबाधादिग्रहसत्त्वेऽनुमितिवारणाय—तत्राप्रामाण्यग्रहधर्मिकाप्रामाण्यग्रहविशिष्टबाधनिश्चयस्य पृथक्प्रतिबन्धकता या बाधग्रन्थे व्यवस्थापितत्वेन तादृशनिश्चयेऽपि यद्रूपावच्छिन्नविषयिता सत्त्वेन तत्राप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वावच्छिन्नप्रतिबन्धकताविरहाद सम्भव इति वाच्यम्, तत्रापि स्वावच्छेदकाभावप्रतियोग्युपहितत्वसम्बन्धेन प्रतिबन्धकतासत्त्वेन व्यापकत्वानपायात्। अस्यायमनुगमः— प्रकृतानु मितित्वव्यापकप्रतिबध्यतावृत्तिरूपवत्त्वसत्प्रतिपक्षत्वम्। प्रतिबध्यतावृत्तित्वं च रूपे स्वसमानाधिकरणभेद प्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्न स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन। स्वाधिकरणता स्वा वच्छिन्नविषयकत्वसम्बन्धेन। भेदप्रतियोगितावच्छेदकता स्वनिरूपितप्रति बन्धकतावत्त्वस्वावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेद कविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावत्त्वोभयसम्बन्धा-वच्छिन्ना। प्रतिबन्धकतावत्त्वं जनकतावत्त्वं च स्वावच्छेदकाभावप्रतियोग्यु

ऽथोऽप्युभयवद्ध्रदेऽतिव्याप्तिरवतरत्येव , उक्तान्यतरसम्बन्धेन प्रतिबन्धकत्व
जनकत्वोभयोरुक्तोभयवद्ध्रदत्वावच्छिन्नविषयिताव्यापकत्वात् ।

अत्र केचित् — विशिष्टान्तराघटितत्वविशेषणेनोक्तोभयवद्ध्रद-
वारणसम्भवः । यत्तु विशिष्टान्तराघटितत्वं यदि स्वावच्छिन्नाविषयक-
प्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयिताव्यापिका प्रकृतानुमितिप्रतिब-
न्धकता तद्रूपावच्छिन्नाघटितत्वरूपं तदा वह्न्यभाववद्ध्रदरूपविशिष्टान्तर
घटितत्वेन उक्तोभयवद्ध्रदवारणसम्भवेऽपि बाधघटितसत्प्रतिपक्षेऽव्याप्ति
वारणाय प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्ववज्जनकतानतिरिक्तवृत्ति
त्वस्यापि निवेशनीयतया उक्तातिप्रसङ्गो दुर्वारः ; न च यद्रूपावच्छिन्नविषय-
कत्वं निरुक्तविरोध्यनुमितिजनकतानतिरिक्तवृत्ति तादृशरूपान्तराघटित
त्वस्य विवक्षणेऽपि मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्तिवारणसम्भवात् न नि-
रुक्तातिव्याप्तिः, तादृशोभयवद्ध्रदस्य तादृशविशिष्टान्तरेण वह्न्यभावव्याप्य
व्याप्यवद्ध्रदेन घटितत्वादिति वाच्यम्, वह्न्यभावव्याप्यवह्न्यभावव्याप्यव्याप्य
वद्ध्रदादिरूपसत्प्रतिपक्षाव्याप्तिवारणाय प्रतिबन्धकतानतिरिक्तत्वस्यापि वि-
शिष्टान्तराविषयितायां निवेशनीयतया उक्तविशिष्टेऽतिव्याप्तितादवस्थ्यादिति ;
तन्न, स्वव्याप्यविरोध्यनुमितिजनकताव्यापकत्व स्वाभाववद्वृत्तित्वोभयसम्ब-
न्धेन प्रकृतानुमितिप्रतिबन्धकताविशिष्टान्यत्वस्य विशिष्टान्तराघटितत्व
शरीरप्रविष्टप्रतिबन्धकतायां निवेशेन केवलप्रतिबन्धकताघटित विशि-
ष्टान्तराघटितत्वनिवेशेऽपि बाधघटितसत्प्रतिपक्षाव्याप्तिविरहात् , ह्रद-
त्वसमानाधिकरणजलाभाववानित्यादौ जलव्यापकसमानाधिकरणजलसमा-
नाधिकरणजलवद्ध्रदरूपबाधघटितसत्प्रतिपक्षज्ञानीयप्रतिबन्धकताविशिष्टत्वा
त्तद्घटकबाधज्ञानीयप्रतिबन्धकताया इति तत्र तादृशबाधघटितत्वस्या-
किञ्चित्करत्वात् । स्वाभावश्च स्वाश्रयत्व-स्वावच्छेदकत्वान्यतरसम्बन्धा-
वच्छिन्नप्रतियोगिताको ग्राह्यः , तेन मेयत्वविशिष्टसत्प्रतिपक्षे नातिव्याप्तिः,
[illegible]

भावसामानाधिकरण्येऽपि स्वाश्रयत्व-स्वावच्छेदकत्वान्यतरसम्बन्धावच्छिन्न परम्परात्यन्ताभावसामानाधिकरण्यविरहात् । एवञ्च निरुक्तकेवलप्रतिबन्धकताघटितविशिष्टान्तराघटितत्वेनोक्तोभयवद्धदवारणसम्भवः । एवं केवल जनकताघटितविशिष्टान्तराघटितत्वनिवेशेऽपि वह्न्यभावव्याप्यवह्न्यभावव्याप्यव्याप्यवद्धदे नाव्याप्तिः ; तादृशजनकतायां स्वव्यापकत्व-स्वाभाववद्वृत्तित्वोभयसम्बन्धेन विरोध्यनुमितिजनकताविशिष्टान्यत्वस्य निवेशात्, यद्धर्मावच्छिन्नजन्यतानिरूपितजनकताविशेष्यदलप्रविष्टा तद्धर्मावच्छिन्नजन्यतानिरूपितजनकताघटितविशिष्टान्तराघटितत्वस्य वा निवेशनीयत्वात् । न च यत्त्वतत्त्वनिवेशादननुगम इति वाच्यम्,-अनुगमस्यापि कथञ्चित्सम्भवात्। तथाहि- जन्यताविशिष्टरूपवत्त्वं विशिष्टान्तराघटितत्वघटितसत्प्रतिपक्षत्वम् । जन्यतावैशिष्ट्यं चाधेयत्व-स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन। आधेयता च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धावच्छिन्ना। स्वाधिकरणता-स्वावच्छिन्नविषयितावत्त्वसम्बन्धावच्छिन्ना। भेदप्रतियोगितावच्छेदकता स्वविशिष्टप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्त्वस्वनिरूपितजनकतावत्त्वोभयसम्बन्धावच्छिन्ना।स्ववैशिष्ट्यञ्चप्रतिबध्यतायांआधेयतासम्बन्धेन।आधेयता च स्वावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नत्वसम्बन्धावच्छिन्ना।।द्वितीयसम्बन्धघटकस्वनिष्ठावच्छेदकता स्वविशिष्टरूपविशिष्टत्वसम्बन्धावच्छिन्ना। रूपे स्ववैशिष्ट्यञ्च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वानिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन । तत्र स्वाधिकरणता-स्वावच्छिन्नविषयिताशालिनिश्चयत्वसम्बन्धावच्छिन्ना।भेदप्रतियोगितावच्छेदकतास्वावच्छेदकावच्छिन्नजन्यतानिरूपितजनकतावत्त्वसम्बन्धावच्छिन्ना । रूपविशिष्टत्वञ्च स्वविशिष्टप्रतीतिविषयितावच्छेदकत्वसम्बन्धावच्छिन्नाधेयत्वस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । प्रतीतौ स्ववैशिष्ट्यं च स्वावच्छिन्नविषयतानिरूपकत्वसम्बन्धावच्छिन्नस्वनि

ष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसम्बन्धेन । स्वनिष्ठावच्छेदकता स्ववि शिष्टप्रतीतिविषयतावच्छेदकत्वसम्बन्धावच्छिन्ना । प्रतीतौ स्ववैशिष्ट्यञ्च पूर्वो क्तसम्बन्धेनेति । एवञ्च निरुक्तकेवलजनकत्वघटितविशिष्टान्तराघटितत्वावि- शेषणेनोभयवद्धदवारणसम्भवः । एवं स्वावच्छिन्नाविषयकप्रतीतिविषयतात्र यद्रूपावच्छिन्नविषयकत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति, यादृशवि- शिष्टान्तरविषयकत्वं जनकतानतिरिक्तवृत्तितादृशविशिष्टद्वयविषयिताशून्यप्र- तीतिविषयत्वरूपजनकत्वप्रतिबन्धकत्वोभयघटितविशिष्टान्तराघटितत्वविशे षणेनाप्युक्तातिव्याप्तिवारणसम्भवः, उक्तपरिष्कारे बाधघटितसत्प्रतिपक्षे वह्न्य भावव्याप्यवह्न्यभावव्याप्यव्याप्यवद्ध्रदे चाव्याप्तिविरहात् । एतेनोक्तरीत्या जनकतायामुक्तोभयसम्बन्धेन जनकताविशिष्टान्यत्वस्य यद्धर्मावच्छिन्नजन्य- तानिरूपितजनकता विशेष्यदलप्रविष्टा तद्धर्मावच्छिन्नजन्यतानिरूपितत्वस्य वा निवेशे वह्न्यभावव्याप्यत्वविशिष्टं यज्जलव्यापकवह्न्यभावसमानाधि करणजलं तद्विशिष्टह्रदेऽतिव्याप्तिः, तत्र सत्प्रतिपक्षज्ञानजनकताया उक्तो भयसम्बन्धेन उन्नायकजनकताविशिष्टत्वात्, वह्न्यभावव्याप्यत्वावच्छिन्नानु- मितिनिष्ठजन्यतामादायोक्तानुगमरीत्या विशिष्टान्तराघटितत्वसम्भवाच्चेति निरस्तम् । विवेचयिष्यते चेदमुपरिष्टादिति वदन्ति ।

अन्ये तु—

सत्यन्तघटकप्रतिबन्धकतायां निरुक्तजनकतावच्छेदकविषयिता- त्वव्यापकतावच्छेदकत्वनिवेशान्नोक्तातिप्रसङ्गः, प्रत्येकज्ञानीयवह्न्यभाव व्याप्यव्याप्यवद्ध्रदविषयितायां निरुक्तजनकतावच्छेदिकायां प्रतिबन्ध कतावच्छेदकत्वविरहात् । न च निरुक्तसत्प्रतिपक्षोन्नायकविषयितायां नि रुक्तजनकतावच्छेदिकायां सत्प्रतिपक्षज्ञानीयप्रतिबन्धकतावच्छेदकत्ववि रहेण सर्वत्रासम्भव इति वाच्यम्, जनकयत्किञ्चिज्ज्ञानीयविषयितात्वव्याप कत्वनिवेशेनासम्भवविरहात् । वह्न्यभावव्याप्यवान् ह्रद इति ज्ञानमादायैव लक्षणगमनसम्भवात् । न च धर्मितावच्छेदकनिष्ठप्रकारतानिरूपितनिर- वच्छिन्नविशेष्यतामादायासम्भव इति वाच्यम्, जनकयत्किञ्चिज्ज्ञानीय—

यत्किञ्चित्त्वानिवेशादननुगम इति वाच्यम् , पूर्वोक्तभेदप्रतियोगितावच्छेदकताया स्ववैशिष्ट्यप्रतिबन्धकतावत्त्वसम्बन्धावच्छिन्नत्वेन विवक्षणीयत्वात् प्रतिबन्धकतायां स्ववैशिष्ट्यं च स्वनिरूपितत्व-स्वविशिष्टज्ञानविशिष्टत्वोभय सम्बन्धेन ज्ञाने स्ववैशिष्ट्यं । च स्वावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपित प्रतिबन्धकतावच्छेदकविषयत्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजन—कतावत्त्वसम्बन्धेन। ज्ञानवैशिष्ट्यञ्च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्न-स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन। स्वाधिकरणता स्वीयकिञ्चिदवच्छिन्नविषयितात्वसम्बन्धावच्छिन्ना ; भेद प्रतियोगितावच्छेदकता स्वावच्छेदकसम्बन्धावच्छिन्नेति ।

यत्तु- उक्तरीत्यासम्भववारणाययत्किञ्चिज्जनकतावच्छेदकविषयितात्व व्यापकतावच्छेदकताकत्वं प्रतिबन्धकतायां निवेशनीयम् , तथा च सत्प्रतिपक्षज्ञानीयजनकतामादायैव लक्षणगमनान्नासम्भव इति । तन्न, वक्ष्यमाण-रीत्या जनकतायां यत्किञ्चित्त्वनिवेशेऽपि ज्ञाने यत्किञ्चित्त्वनिवेशस्यावश्य-कतया तत एवोक्तदोषवारणे जनकतायां यत्किञ्चित्त्वनिवेशानावश्यकत्वात् । एकरूपेण जनकतापक्षसाधारण्यानुरोधस्य वक्ष्यमाणत्वाच्च ।

यत्तु जनकयत्किञ्चिज्ज्ञानीयायां सामानाधिकरण्यविषयितायां सत्प्रतिपक्षज्ञानीयप्रतिबन्धकतावच्छेदकत्वविरहेण प्रतिहेतुव्यापकसाध्याभाव समानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षाव्याप्तिप्रसङ्ग इति । तन्न ; जल व्यापकवह्न्यभावसमानाधिकरणजलवान्न वेति संशयव्यावृत्तनिश्चयत्व—शरीरघटकतया सामानाधिकरण्यविषयताया अपि तादृशप्रतिबन्धकतावच्छेदकसम्भवात् । तथाहि— स्वावच्छेदकधर्मिपर्याप्तावच्छेदकताकप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपितहृदत्वावच्छिन्नविशेष्यताकत्व—सम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व-स्वनिरूपितहृदत्वावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन जलत्वावच्छिन्नप्रकारताविशिष्टज्ञा-

सामान्याभाववान्वेति संशयस्यापि व्यावृत्तिः । स्वावच्छेदकतायाः पर्याप्त्य निवेशात् प्रतियोगितावच्छेदकतापर्याप्तिनिवेशाच्च ह्रदस्समुद्रजलवान्न वा जलवांश्च ह्रद इत्यांशिकनिश्चयस्य सङ्ग्रहः। तथा च स्वनिरूपितावच्छेदक तात्वेन सामानाधिकरण्यविषयिताया अपि प्रतिबन्धकतावच्छेदकत्वात् । प्रतिबन्धकतावच्छेदकतावच्छेदकसम्बन्धघटकस्यापि अवच्छेदककोटिप्रवि ष्टानामप्यवच्छेदकत्वे प्रतिबन्धकतावच्छेदकत्वसम्भवात् । अतएव प्रतिज्ञो त्तरहेतूत्तरोदाहरणोत्तरोपनयनोत्तरत्वविशिष्टनिगमनत्वावच्छिन्नभेदप्रति — योगितावच्छेदकत्वं निगमनस्योपपादितमवयवग्रन्थे । यदि च केवला न्वयिग्रन्थोक्तनिष्कृष्टकल्परीत्या संशयसमुच्चययोर्वैलक्षण्यनिर्वाहाय संशये कोटिद्वयप्रकारितयोरवच्छेद्यावच्छेदकभावस्स्वीक्रियते , एवञ्च स्वनिरूपक तानवच्छेदकधर्मावच्छिन्ननिरूपितप्रकारितान्तरानवच्छिन्नप्रकारिताकज्ञान मेव जलत्वावच्छिन्न प्रकारकनिश्चयत्वम् , प्रकारितायां निरूपितत्वांशोपा- दानाच्च विशिष्टवैशिष्ट्यावगाहिज्ञानसङ्ग्रहः , संशयत्वं वा मानसत्वव्या प्यजातिरव्याप्यवृत्तिः , सर्वत्र संशयस्य मानसताया एवोपगमात् , चक्षु स्सन्निकर्षादिमद्धार्मिक संशयदशायां पर्वतं पश्यामीत्यनुव्यवसायश्च संशयस्य पूर्वं परतो वा जायमानतद्विषयकचाक्षुषज्ञानादिकल्पनेन तद्विषयकतयोप पादनीयः, संशत्वस्य चावच्छेदकं तद्धर्मावच्छिन्नविशेष्यकत्वावच्छिन्नतत्कोटि प्रकारकत्वमेव, तद्धर्मिविशेष्यकत्वावच्छिन्नजलप्रकारकत्वावच्छेदेन संशय त्वाभाववत्त्वमेव जलप्रकारकनिश्चयत्वम्,जातेरव्याप्यवृत्तिता मिश्रादिभिरपि स्वीकृतेति नापसिद्धान्तभीतिः ; भवतु वा संशयत्वजातिर्व्याप्यवृत्तिरेव, त द्विशिष्ट निरूपितत्वं संशयीयकोटिद्वयीयविषयितायामेवाप्यते , एवञ्च संश- यत्वविशिष्टानिरूपितजलत्वावच्छिन्नप्रकारकत्वमेव जलवत्तानिश्चयत्वम्, संशयनिश्चयाविषयतयोश्च भेद इत्यादिकं विभाव्यते, तदा सामानाधिकरण्य प्रकारताभिन्नपरम्परासम्बन्धानवच्छिन्नस्वीयप्रकारतात्वव्यापकतावच्छेदक- ताकत्वस्य प्रतिबन्धकताविशेषणत्वेन सामानाधिकरण्यविषयतायाः प्रति बन्धकतानवच्छेदकत्वेऽपि क्षतिविरहात् । साध्याभाववद्वृत्तिमत्पक्षविषयक

किञ्चिदवच्छिन्नविषयितात्वव्यापकावच्छेदकताकत्वनिवेशसम्भवात् । न च निश्चयनिष्ठजनकतावच्छेदिकायां विशिष्टवैशिष्ट्यावगाहिज्ञानीयपरम्परा सम्बन्धावच्छिन्नव्याप्तिप्रकारतायां प्रतिबन्धकतावच्छेदकत्वविरहेणासम्भवस्य प्रसङ्गेन व्यापकताघटितसत्प्रतिपक्षमात्रेऽव्याप्तिकथनस्यानुचितत्वाच्च । अस्माकं तु परम्परासम्बन्धानवच्छिन्नयत्किञ्चिज्ज्ञानीयप्रकारतात्वव्यापकतावच्छेदकतात्वस्य प्रतिबन्धकत्वविशेषणत्वान्न तत्रापि दोषः ।

यत्तु व्याप्त्यंशे निश्चयत्वानिवेशप्रयुक्तलाघवस्य तुल्यतया विशिष्टवैशिष्ट्यावगाहिज्ञानत्वेनैव तादृशज्ञानस्य प्रतिबन्धकत्वमिति नोक्तरीत्या सम्भव इति; तन्न, विशेष्येविशेषणमिति रीत्या तदभावव्याप्यवत्ताज्ञानस्य विशृङ्खलोपस्थितिमूलकस्य प्रतिबन्धकत्वानुभवापलापापत्तेः । किञ्च प्रतिबन्धकतायां विरोधितावच्छेदकरूपावगाहित्वमेव नियामकम्, न तु विलक्षणविषयितावत्त्वमिति व्यधिकरणधर्मावच्छिन्नाभावखण्डने स्पष्टम् । जनकतायां तु ज्ञानद्वयादिव्यावृत्तविलक्षणविषयतावत्त्वमेव नियामकं नैयायिकानाम् । तथा च विशेष्येविशेषणमिति रीत्या ज्ञानस्यापि विरोधितावच्छेदकरूपावगाहित्वेन प्रतिबन्धकत्वं दुर्वारमिति ।

यत्तु सामानाधिकरण्यविषयितायाः प्रतिबन्धकतानवच्छेदकतया व्यापकसामानाधिकरण्यघटितसत्प्रतिपक्षाव्याप्तिवारणाय जनकतावच्छेदकमुख्यविशेष्यतात्वव्यापकतावच्छेदकताकत्वं निवेशनीयमिति; तन्न, व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानस्यैवानुमितिहेतुतया परम्परासम्बन्धावच्छिन्नव्याप्तिप्रकारतानिरूपितपक्षनिष्ठविशेष्यतायां जनकतावच्छेदिकायां प्रति–बन्धकतावच्छेदकत्वविरहेणासम्भवस्यैव प्रसङ्गात् । प्रतियोग्यसामानाधि–करण्यगर्भव्यभिचारग्रहप्रतिबन्धकतावच्छेदकविषयिताशालिनिश्चयत्वेन प्र-तियोग्यसामानाधिकरण्यगर्भतदगर्भव्याप्तिनिश्चययोरेकरूपेण जनकताया व्याप्त्यनुगमसिद्धान्तलक्षणयोरुक्ततया तादृशजनकतावच्छेदकतायाः प्रति-योगिवैयधिकरण्यघटितजलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदत्वा–

वच्छिन्नमुख्यविशेष्यतायां च सत्त्वेन तत्र सत्प्रतिपक्षज्ञानीयप्रतिबन्धकतावच्छेदकत्वाभावेनाऽव्याप्तेः । प्रतियोगिवैयधिकरण्याघटितव्यापकत्वावगाहि निश्चयस्यैव प्रतिबन्धकत्वात् । न च प्रतियोगिवैयधिकरण्यघटितव्यापकताघटितजलव्यापकवह्न्यभावसमानाधिकरणजलवत्तानिश्चयस्यापि प्रतियोगिवैयधिकरण्याघटितव्यापकतावगाहिजलव्यापकवह्न्यभावनिश्चयविशिष्टत्वेन प्रतिबन्धकतासम्भवान्नोक्ताऽव्याप्तिरिति वाच्यम्, यादृशजलव्यक्तिघटितोक्तप्रतियोगिवैयधिकरण्यघटितव्यापकतागर्भविशिष्टजलवद्ध्रदज्ञानं जलव्यापको वह्न्यभाव इति ज्ञानकाले न जातं तादृशजलवद्ध्रदविषयताया अपि सामान्यान्तर्गततया तादृशविषयतात्वव्यापकावच्छेदकताकत्वस्य प्रतिबन्धकतायामभावेनाऽव्याप्तेर्दुर्वारत्वात् । तादृशव्यक्तिरप्रामाणिकीति चेत् । प्रामाणिकत्वेपि सम्भवपक्षस्यैवादरणीयत्वात् । अस्माभिस्तूक्तरीत्या अव्याप्तिवारणाय जनकयत्किञ्चिज्ज्ञानीयविषयतात्वव्यापकावच्छेदकताकत्वं निवेश्यते, प्रतियोगिवैयधिकरण्याघटितव्यापकत्वावगाहिनिश्चयीयविषयितामादायैव लक्षणसमन्वयात्. भवतां मते जनकतावच्छेदकयत्किञ्चिज्ज्ञानीयमुख्यविशेष्यतात्वव्यापकावच्छेदकताकत्वनिवेशे तूक्तोभयवद्ध्रदेऽतिव्याप्तिर्दुर्वारा, तादृशजनकतावच्छेदकीभूतोभयवद्ध्रदविषयकज्ञानीयमुख्यविशेष्यकत्वव्यापकावच्छेदकताकत्वस्यतज्ज्ञानीयप्रतिबन्धकतायामक्षतत्वात्।एवमवच्छेदकावच्छेदेन परामर्शस्य पक्षतावच्छेदकव्यापकत्वविशिष्टसंयोगसम्बन्धावच्छिन्नप्रकारताशालिनिश्चयत्वेनैव जनकतया पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यताया जनकतानवच्छेदकत्वेन जनकतावच्छेदकमुख्यविशेष्यत्वाप्रसिध्यावच्छेदकावच्छेदेन सत्प्रतिपक्षाऽव्याप्तेश्च । अस्माकं तु जनकयत्किञ्चिज्ज्ञानीयपरम्परासम्बन्धानवच्छिन्नप्रकारतात्वव्यापकावच्छेदकत्वप्रसिध्या नाऽव्याप्तिः । एवं भवदुक्तविशेषणेनोक्तोभयवद्ध्रदवारणं च न सम्भवति, वह्न्यभावव्याप्यव्याप्यवह्न्यभाववान् ह्रद इति ज्ञानीयजनकतामादायोक्तविशेषणसम्भवात् । हेतुतावच्छेदकभेदेन

...कतावच्छेदकीभूतमुख्यविशेष्यतात्वव्यापकावच्छेदकताकत्वस्य बाधप्रति-
...कतायां सत्त्वात्, अस्माकन्तु वह्न्यभावव्याप्यव्याप्यवह्न्यभाववानिति
...सामान्याप्रि नातिव्याप्तिसम्भवः। स्वीयतादृशप्रकारतात्वस्य वह्न्यभाव
...दिप्रकारत्वादिषु सत्त्वेन तत्र प्रतिबन्धकतावच्छेदकत्व
...सत्त्वात्।

...निरुक्तजनकतावच्छेदकमुख्यविशेष्यतात्वव्यापकतावच्छेदक-
ताकत्वनिवेशनं न सम्भवति, जलव्यापकवह्न्यभावसमानाधिकरणजलवान्
ह्रदः शैवालव्यापकवह्न्यभावसमानाधिकरणशैवालवान् ह्रद इत्यादिनिखिलप
...साधारण्यानुरोधेन स्वावच्छिन्नप्रकारतानिरूपितव्यापकत्वप्रकारतानि-
रूपितसाध्याभावत्वावच्छिन्नविषयतानिरूपितसामानाधिकरण्यविषयतानि-
रूपितत्वस्वावच्छिन्नत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टप्रकारतानिरूपितह्रद-
त्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन उक्तसर्वनिश्चयानामेकरूपेण जनकत्व
स्वीकारात् निरुक्तजनकतावच्छेदकमुख्यविशेष्यतात्वस्य शैवालव्यापक
वह्न्यभावसमानाधिकरणशैवालवद्ध्रदविषयतायां सत्त्वेन जलव्यापको वह्न्य-
भाव इति ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वस्याभावेन निरुक्ता
ऽव्याप्तिर्दुर्वारा। न च जलव्यापको वह्न्यभावः जलवांश्च ह्रदः शैवालव्या-
पको वह्न्यभावः शैवालवांश्च ह्रद इत्यादिसकलनिश्चयसाधारण्यानुरोधेन
स्वनिरूपितव्यापकत्वनिष्ठप्रकारतानिरूपितप्रकारतावच्छेदकावच्छिन्नप्रकार-
तानिरूपितह्रदत्वावच्छिन्नविशेष्यकताकत्वस्वनिरूपकनिश्चयविशिष्टत्वोभय-
सम्बन्धेन वह्न्यभावत्वावच्छिन्नविशेष्यताविशिष्टनिश्चयत्वेनैकप्रतिबन्धक-
त्वाङ्गीकारात् निरुक्तानुगतजनकतावच्छेदकविषयितात्वव्यापकत्वं निरुक्त
प्रतिबन्धकतावच्छेदकतायामक्षतमिति न निरुक्तसत्प्रतिपक्षाव्याप्तिरिति
वाच्यम्, तथापि निरुक्तप्रतिबन्धकतावच्छेदकतायाः वह्न्यभावत्वावच्छिन्न
विशेष्यतायामेव सत्त्वेन जनकतावच्छेदकताया ह्रदत्वावच्छिन्नविशेष्यताया-
मेव सत्त्वेन जनकतावच्छेदकविषयितात्वव्यापकत्वस्य प्रतिबन्धकतावच्छे-
दकतायामसम्भवेनोक्तसत्प्रतिपक्षाव्याप्तेर्दुर्वारतेति। तन्न, नानाविधान्वय-

व्यतिरेकव्याप्तिज्ञानानां मणिमन्त्रादिन्यायेन व्यभिचारधीप्रतिबन्धकतां स्वीकृत्य व्यभिचारग्रहप्रतिबन्धकतावच्छेदकप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वेनानुगतरूपेण जनकताया अनुमितिग्रन्थादिसिद्धतया अन्वयव्याप्तिघटितसत्प्रतिपक्षादिज्ञानजनकतावच्छेदकत्वस्य-व्यतिरेकव्याप्तिघटितसत्प्रतिपक्षादिविशेष्यतायां सत्त्वेन तज्ज्ञानीयप्रतिबन्धकतावच्छेदकत्वस्याभावेनासम्भवस्य दुर्वारत्वात् । केवलान्वयिग्रन्थे मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वस्याप्रामाणिकतयोक्तानुगतरूपेण जनकत्वं दूषितमित्युक्त्यासम्भववारणानावश्यकतेति चेत्, व्यापकसामानाधिकरण्य-ज्ञानस्यापि भवदुक्तानुगतरूपेण जनकत्वं केवलान्वयिग्रन्थे दूषितमित्युक्त्या-व्याप्तिवारणानावश्यकमिति तुल्यम् । एवं संयोगेन साध्याभाववन्निरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावविशिष्टवान् समवायेन साध्याभाववन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावविशिष्टवानित्यादिनानासम्बन्धावच्छिन्नप्रकारताशालिज्ञानानां स्वावच्छेदकसम्बन्धावच्छिन्नाधेयतात्वावच्छिन्नत्वस्वनिरूपिताभावविषयतानिरूपितत्वोभयसम्बन्धेन पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकारताविशिष्टप्रतियोगितासम्बन्धावच्छिन्न वृत्तित्वप्रकारतानिरूपिताधिकरणप्रकारतानिरूपिताभावप्रकारतानिरूपित-साध्यप्रकारताशालिनिश्चयत्वेनानुगतरूपेण हेतुत्वस्वीकारपक्षेऽसम्भवस्यैव सम्भवेनाऽव्याप्तिशङ्काया असङ्गतिश्च । अस्तु वा यथाकथञ्चिच्छङ्का अथापि भवदुक्तरीत्यानुगतरूपेण प्रतिबन्धकत्वेऽपि जनकतावच्छेदकीभूतह्रदत्वावच्छिन्नविशेष्यतायां प्रतिबन्धकतावच्छेदकत्वाभावेनाव्याप्तिरित्यसङ्गतमेव, स्वनिरूपितप्रकारतावच्छेदकावच्छिन्नप्रकारतानिरूपितव्यापकत्वनिष्ठप्रकारतानिरूपितवह्न्यभावत्वावच्छिन्नविशेष्यताकत्वस्वनिरूपकनिश्चयविशिष्टत्वोभयसम्बन्धेन ह्रदत्वावच्छिन्नविशेष्यताविशिष्टनिश्चयत्वेनाप्युक्तनिश्चयानां विनिगमनाविरहेण प्रतिबन्धकताया अवश्यकत्वेन तादृशप्रतिबन्धकता-

विशिष्टनिश्चयत्वेनैवानुगतरूपेण प्रतिबन्धकत्वं प्रकारतावैशिष्ट्यञ्च स्वनिरूपितह्रदत्वावच्छिन्नविशेष्यताकनिश्चयविशिष्टत्वस्वावच्छेदकावच्छिन्नप्रकारतानिरूपितव्यापकत्वप्रकारतानिरूपितवह्न्यभावत्वावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन, स्वपदार्थश्चोभयत्र ह्रदत्वावच्छिन्नविशेष्यतानिरूपित—जलत्वावच्छिन्नप्रकारता, तथा चोक्तरीत्या प्रतिबन्धकत्वे पूर्वोक्त सम्बन्धद्वयेन ह्रदत्वावच्छिन्नविशेष्यताविशिष्टनिश्चयत्वेन प्रतिबन्धकतामादाय विनिगमनाविरहासम्भवः, ह्रदत्वावच्छिन्नत्वरूपपदार्थद्वयस्य प्रतिबन्धकतावच्छेदकघटकत्वेन गौरवात्। अस्माकन्तु शुद्धप्रकारतात्वेनैव प्रकारतायाः प्रतिबन्धकतावच्छेदकत्वघटकत्वेन लाघवात्। तथा चैकरूपेण जनकतापक्षे उक्ताव्याप्तिसङ्गतिः। न च स्वनिरूपितह्रदत्वनिष्ठावच्छेदकतानिरूपकनिश्चयविशिष्टत्वस्वनिरूपितप्रकारतावच्छेदकावच्छिन्नप्रकारतानिरूपितव्यापकत्वप्रकारतानिरूपितवह्न्यभावत्वावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन विशेष्यताविशिष्टनिश्चयत्वेन विनिगमनाविरहेण प्रतिबन्धकत्वमावश्यकमिति नोक्ताव्याप्तिसम्भवः। विशेष्यतायाः प्रतिबन्धकतावच्छेदकत्वादिति वाच्यम्, तथा सति धर्मितावच्छेदकताप्रकारतयोरभेदमते एकत्र द्वयमिति रीत्या जलह्रदत्वोभयं धर्मितावच्छेदकीकृत्य घटप्रकारेण जलवद्ध्रदो घटवानिति निश्चयविशिष्टस्य जलव्यापको वह्न्यभाव इति निश्चयस्यापि प्रतिबन्धकत्वापत्तेः घटप्रकारतानिरूपितजलह्रदत्वोभयावच्छिन्नविशेष्यतायास्स्वपदेनोपादाने तादृशविशेष्यतानिरूपितह्रदत्वनिष्ठावच्छेदकतानिरूपकनिश्चयवैशिष्ट्यस्य प्रथमसम्बन्धस्य तादृशोविशेष्यतानिरूपितजलत्वावच्छिन्नधर्मितावच्छेदकत्वात्मकप्रकारतामादाय द्वितीयसम्बन्धस्य च सम्भवात्। प्रकारताविशिष्टनिश्चयत्वेन प्रतिबन्धकतामते च स्वनिरूप्यतावच्छेदकह्रदत्वावच्छेद्यत्वाश्रयविशेष्यतानिरूपकनिश्चयवैशिष्ट्यस्य प्रथमसम्बन्धत्वान्न दोषः,

तादृशोभयावच्छिन्नविशेष्यकज्ञाने तादृशोभयावच्छिन्नविशेष्यतात्वघटत्वा-
वच्छिन्नप्रकारतात्वाभ्यां निरूप्यनिरूपकभावेऽपि हृदत्वावच्छिन्नविशेष्यता-
त्वजलप्रकारतात्वाभ्यां तद्विरहादिति ; तन्न , स्वनिष्ठहृदत्वावच्छेद्यत्वा-
वच्छिन्ननिरूप्यताकप्रकारतावच्छेदकावच्छिन्नप्रकारतानिरूपितव्यापकत्व-
प्रकारतानिरूपितवह्न्यभावत्वावच्छिन्नविशेष्यताकत्वस्वनिरूपकनिश्चयविशि-
ष्टत्वोभयसम्बन्धेन विशेष्यताविशिष्टनिश्चयत्वेनापि प्रतिबन्धकताया निर्दुष्ट-
तया विनिगमनाविरहसिद्धां तादृशप्रतिबन्धकतामादायैव लक्षणसमन्वय-
सम्भवेन उक्ताव्याप्त्यसङ्गतेर्दुर्वारत्वात् । न च घटवद्धृदवज्जलवान् घट
इत्यादिज्ञानविशिष्टस्य जलव्यापको वह्न्यभाव इति ज्ञानस्य प्रतिबन्ध-
कत्वापत्तिः । अन्तरा भासमानविशेष्यताप्रकारतयोरभेदमते उक्तज्ञान-
स्यापि हृदत्वावच्छेद्यत्वावच्छिन्ननिरूप्यताकजलत्वावच्छिन्नप्रकारताकत्वात् ।
अतः हृदत्वावच्छेद्यत्वविशेष्यतात्वोभयावच्छिन्ननिरूप्यताकत्वेन प्रकारता
निवेशनीया, तथा च विशेष्यताविशिष्टनिश्चयत्वेन प्रतिबन्धकतामते विशे-
ष्यतात्वस्य संसर्गघटकतया प्रकारघटकतया च द्विधा निवेशनमावश्यकमि-
ति गौरवमिति वाच्यम्;स्वनिरूप्यतावच्छेदकहृदत्वावच्छेद्यत्वविशेष्यतात्वो-
भयाश्रयनिरूपकनिश्चयविशिष्टत्वेन प्रकारताविशिष्टत्वेन प्रतिबन्धकता-
वादिमते निश्चयस्य संसर्गघटकतावद्विशेष्यताविशिष्टत्वेन प्रतिबन्धकता-
वादिमते स्वनिष्ठहृदत्वावच्छेद्यत्वविशेष्यतात्वोभयावच्छिन्ननिरूप्यताकत्वेन
प्रकारतानिवेशेन प्रकारतात्वेन तदनिवेशेन साम्यात् । न चैवं जल
वान् हृद इति निश्चयविशिष्टस्य संयोगव्यापको वह्न्यभाव इति निश्चयस्य
प्रतिबन्धकत्वापत्तिः , संयोगनिष्ठसंसर्गताया अप्युक्तनिरूप्यताकत्वादिति
वाच्यम् , सम्बन्धान्तरावच्छिन्नप्रकारताव्यावर्तकसंयोगावच्छिन्नत्वनिवे-
शावश्यकतया तत एव संसर्गताव्यावृत्तेः , प्रकारतात्वानिवेशात् ।
संसर्गताया निरवच्छिन्नत्वेन तदवच्छेदकाप्रसिद्धेश्च । तथा च साम्याद्वि-
निगमनाविरहो दुर्वार इति । प्रकारकोटौ सम्बन्धावच्छिन्नत्वेन प्रकार-
तानिवेश्य प्रकारतात्वानिवेशेऽपि प्रकारकोटावाधिक्याद्गौरवं स्फुटमिति-
बोध्यम् ।

यत्तु तादृशमुख्यविशेष्यतात्वव्यापकतावच्छेदकताकत्वनिवेशे जलव्यापकवह्न्यभावकालीनजलवह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽतिव्याप्तिर्दुर्वारा। जलव्यापको वह्न्यभावः जलवान् ह्रद इति वह्न्यभावव्याप्यव्याप्यव्यापको वह्न्यभावः वह्न्यभावव्याप्यव्याप्यवांश्च ह्रद इत्युभयोरेकरूपेण प्रतिबन्धकत्वाङ्गीकारात्, निरुक्तज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकतायास्तादृशजनकतावच्छेदकीभूतप्रत्येकज्ञानीयविषयतायामपि सत्त्वेन निरुक्तजनकतावच्छेदकविषयितात्वव्यापकावच्छेदकताकत्वस्य उक्तज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायां सत्त्वादिति; तन्न, उक्तजनकतावच्छेदकताया वह्न्यभावव्याप्यव्याप्याव्यापकवह्न्यभावकालीनवह्न्यभावव्याप्यव्याप्यवद्ध्रदत्वावच्छिन्नविषयतायामपि सत्त्वेन तत्रोक्तप्रतिबन्धकतावच्छेदकत्वाभावात्, तादृशज्ञानीयविषयितायां वह्न्यभावव्याप्यव्याप्यव्यापको वह्न्यभाव इति ज्ञानकालीनज्ञानीयत्वासम्भवेन उक्तप्रतिबन्धकतावच्छेदकत्वासम्भवात्। वह्न्यभावव्याप्यत्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकतायास्तत्राक्षतत्वात्। नच-वह्न्यभावव्याप्यव्याप्याव्यापकत्वांशेऽप्रामाण्यज्ञानास्कन्दितस्य तादृशनिश्चयस्योत्तरं वह्न्यभावव्याप्यव्याप्यव्यापको वह्न्यभाव इति ज्ञानस्योत्पत्तौ बाधकाभावेन तादृशनिश्चयस्यापि निश्चयविशिष्टत्वेन प्रतिबन्धकनिश्चयत्वसम्भवात्। तादृशज्ञानीयविषयिताया अपि प्रतिबन्धकतावच्छेदकत्वं सम्भवतीत्युक्तविशिष्टेऽतिव्याप्तिर्दुर्वारैवेति वाच्यम्, अप्रामाण्याभाववज्ज्ञानसामान्यकालीनत्वं निष्प्रकारत्ववज्ज्ञानसामान्यकालीनत्वं वा वह्न्यभावव्याप्यव्याप्याव्यापकवह्न्यभावकालीनवह्न्यभावव्याप्यव्याप्यांशेऽवगाहमानज्ञानीयविशेष्यतायां प्रतिबन्धकतावच्छेदकत्वासम्भवेनातिव्याप्त्यप्रसक्तेः। तादृज्ञानीयविशेष्यताया अप्रामाण्यज्ञानास्कन्दितज्ञानीयत्वासम्भवात्। पूर्वमप्रामाण्यज्ञानस्वीकारे ज्ञानत्वावच्छेदेन निष्प्रकारत्वावगाहितादृशज्ञानस्यैवासम्भवात्। तादृशज्ञानोत्तरमपि तादृशज्ञानरूपप्रतिबन्धकबलादेव अप्रामाण्यज्ञानासम्भवात्। नच तादृशज्ञानस्य ज्ञानसामान्ये निष्प्रकारकत्वावगाहित्वेऽपि तस्य पूर्वं परतो वा प्रमात्वाभावरूपाप्रामाण्यावगाहिज्ञान-

सम्भवतीति वाच्यम् , प्रतियोगित्वस्वरूपान्यतरसम्बन्धावच्छिन्नवृत्तित्वाभाववत्प्रकारकत्वकालीनत्वावगाहितादृशज्ञानीयविशेष्यताया एवमपि प्रतिबन्धकतावच्छेदकत्वासम्भवेनातिव्याप्तेरप्रसक्तेः । प्रकारितात्वावच्छेदेनोक्तान्यतरसम्बन्धावच्छिन्नवृत्तित्वाभावावगाहिज्ञानस्यैव स्वरूपसम्बन्धेन प्रतियोगितासम्बन्धेन वा प्रकारित्वप्रकारकज्ञाने प्रतिबन्धकतया उक्तज्ञानोत्तरं प्रतियोगितासम्बन्धेन प्रकारित्वप्रकारकस्य प्रमात्वाभावावगाहिज्ञानस्य भ्रमत्वावगाहिज्ञानस्य चासम्भवात् ।

अथ सप्रकारकज्ञानकालीनजलस्यैव प्रतिहेतुत्वे सप्रकारकज्ञानकालीनजलव्यापकवह्न्यभावव्याप्यसमानाधिकरणतादृशजलजलव्यापकवह्न्यभाकालीनजलोभयवद्ध्रदेऽतिव्याप्तिः । तादृशवह्न्यभावव्याप्यव्याप्यवत्तादृशज्ञानस्य ज्ञानत्वावच्छेदेन निष्प्रकारत्वावगाहित्वासम्भवेनाप्रामाण्यज्ञानास्कन्दिततादृशज्ञानमादायातिव्याप्तिसङ्गतिरिति चेन्न । एकरूपेण जनकतामते वह्न्यभावव्याप्यव्याप्यशुद्धजलवत्ताज्ञानस्यापि जनकत्वेन वह्न्यभावव्याप्यव्याप्याव्यापकवह्न्यभावकालीनत्वं उक्तप्रकारकत्वाभाववत्तादृशज्ञानसामान्यकालीनत्वं चावगाहमानज्ञानीयविषयितायां जनकतावच्छेदिकायां प्रतिबन्धकतावच्छेदकत्वाभावेनातिव्याप्त्यप्रसक्तेः । पक्षतावच्छेदककोटौ सप्रकारकज्ञानकालीनकस्य घटकत्वे तादृशपक्षतावच्छेदकस्थले कथञ्चिदतिव्याप्तिसम्भवेऽपि शुद्धह्रदपक्षकस्थलेऽतिव्याप्त्यप्रसक्तिरेव । नच वह्न्यभावव्याप्यव्याप्याव्यापकत्वांशे संशयरूपस्योक्तज्ञानस्यानन्तरं वह्न्यभाव व्याप्यव्याप्यव्यापको वह्न्यभाव इति ज्ञानसम्भवात् । निश्चयात्मक तादृशज्ञानविशेष्यताया अपि प्रतिबन्धकतावच्छेदकत्वसम्भवः , संशयनिश्चयविषयितयोरभेदादिति वाच्यम् ; उक्तान्यतरसम्बन्धावच्छिन्नवृत्तित्वाभाववत्प्रकारितासामान्यकालीनवह्न्यभावव्याप्यव्याप्याव्यापकवह्न्यभाव-

कालीनवह्न्यभावव्याप्यव्याप्यवद्ध्रदो घटवानिति ज्ञानस्य वह्न्यभावव्याप्य व्याप्यव्यापकत्वांशे संशयत्वायोगात् , धर्मितावच्छेदकांशे संशयत्वा-नभ्युपगमात् । अतएव जगदीशेनोक्तं बाधग्रन्थे वस्तुतो यत्र पक्षा-पेक्षया साध्याभावो लघुः तत्र तत्प्रकारक एव बाधनिश्चयो विरोधी, यथा चैत्रावलोकितहृदो वह्निमानित्यादौ , तत्प्रकारकनिश्चयत्वापेक्षया साध्याभावप्रकारकनिश्चयत्वस्यैव लघुत्वेन साध्यवत्ताज्ञानप्रतिबन्धकता-वच्छेदकत्वात् , यत्र साध्याभावापेक्षया पक्ष एव लघुः तत्र साध्या-भावधर्मिकपक्षप्रकारकनिश्चय एव विरोधी , यथा हृदश्चैत्रावलोकितवह्नि-मानित्यादौ यत्र पक्षस्साध्याभावश्च द्वयमेव तुल्यशरीरं तत्र साध्याभाव-प्रकारकस्येव पक्षप्रकारस्यापि बाधनिश्चयस्य विरोधित्वं , यथा घटा-भावो वह्निमानित्यादाविति तु परमार्थ इति । तथा चोक्तज्ञानीयविशे-ष्यतायां जनकतावच्छेदिकायां प्रतिबन्धकतावच्छेदकत्वाभावात् । न जलव्यापकवह्न्यभावकालीनजलवह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽतिव्या-प्तिरिति ।

किञ्च जलव्यापको वह्न्यभावः जलवांश्च ह्रदः वह्न्यभावव्याप्य-व्याप्यव्यापको वह्न्यभावः वह्न्यभावव्याप्यव्याप्यवांश्च हृद इत्यादिज्ञाना-नामेकरूपेण प्रतिबन्धकत्वाङ्गीकारोऽपि नोचितः , जातिमद्व्यापको वह्न्य-भावः जलवांश्च हृदः जलव्यापको वह्न्यभावः जातिमद्वांश्च हृद इति ज्ञानद्वयस्य प्रतिबन्धकत्ववारणाय स्वनिरूपितव्यापकत्वप्रकारतानिरूपित-प्रकारतानिरूपितनिरवच्छिन्नावच्छेदकतासमानाधिकरणनिरवच्छिन्नाव-च्छेदकताकप्रकारतानिरूपितहृदत्वावच्छिन्नविशेष्यताकत्वस्वनिरूपकनिश्चय विशिष्टत्वोभयसम्बन्धेन वह्न्यभावत्वावच्छिन्नविशेष्यताविशिष्टनिश्चयत्वेन प्रतिबन्धकताया आवश्यकतया अविशेषितधर्मावच्छिन्ननिरूपितव्यापक त्वावगाहिनिश्चयविशिष्टनिश्चयकिञ्चिद्विशेषितधर्मावच्छिन्नव्यापकत्वावगाहि-

निश्चयविशिष्टनिश्चययोरेकरूपेण प्रतिबन्धकत्वासम्भवात्। अतएवैकरूपेण जनकतामतेऽपि वह्निव्याप्यधूमवान् वह्निव्याप्यजातिमद्वानित्यादिज्ञानानां पृथगेव हेतुत्वमुक्तं नव्यमतवादार्थे। वह्निव्यापकीभूताभावप्रतियोगिजलं जलवान् ह्रदः वह्निव्यापकीभूताभावप्रतियोगिजातिमज्जातिमद्वान् ह्रद इत्यादिज्ञानानामनुगतरूपेण प्रतिबन्धकतापक्षेऽपि पृथगेव प्रतिबन्धकत्वमुक्तं चन्द्रनारायणीये। अपि चोभयवद्ध्रदेऽतिव्याप्तिशङ्कैव नोचिता, जलव्यापकवह्न्यभावकालीनजलवद्ध्रदस्यापि विरोधस्य साक्षादनुमितिप्रतिबन्धकहेत्वाभासत्वपक्षे सामानाधिकरण्यविषयिताया-व्याप्तिशरीरेऽनिवेशेन विरोध्युन्नायकत्वसम्भवेन सत्प्रतिपक्षरूपताया दुर्वारत्वात्। एतदेवोक्तं सिद्धान्तलक्षणे गादाधर्याम् वस्तुतस्तु विरुद्धत्वेन ज्ञायमानधर्मवत्ताज्ञानस्यानुमितावेव प्रतिबन्धकताया वक्ष्यमाणतया साध्यसामानाधिकरण्यशरीरेऽपि सम्बन्धविशेषानिवेशेऽपि न क्षतिः, सामानाधिकरण्यविषयितायाः प्रयोजकत्वं विशिष्टपरामर्शनिर्वाहाय चपेयत" इत्यादिना। कृष्णभट्टैरपि जलव्यापकवह्न्यभावकालीनजलवद्ध्रदादिव्यावृत्तिरशक्या स्यादिति सामान्यनिरुक्तिप्रतीकमुपादाय व्याख्यातम्-
"तस्योदासीनविषयितानिरूपकपदार्थघटितत्वाविशेषेण व्याप्तौ सम्बन्धसामान्यगर्भसामानाधिकरण्यनिवेशपक्षे साध्याभावोन्नायकत्वाविशेषेण च लक्ष्यत्वापात इत्यर्थः" इत्यादिना। तथा चोक्तविशिष्टेऽतिव्याप्तिशङ्काया मेयत्वविशिष्टसत्प्रतिपक्षातिव्याप्तिशङ्कातुल्यत्वान्न युक्ततेति।

एतेनोक्तरीत्या यत्किञ्चिज्ज्ञानीयविषयितात्वव्यापकावच्छेदकताकत्वनिवेशस्यावश्यकतया केवलवह्न्यभावव्याप्यधूमवान् ह्रद इति ज्ञानीयविषयितात्वव्यापकावच्छेदकताकत्वस्य प्रतिबन्धकतायां सत्त्वात्। जलव्यापकेत्याद्युक्तोभयवद्ध्रदेऽतिव्याप्तिर्दुर्वारेति निरस्तमिति कृतं पल्लवितेनेति वदन्ति।

तिपक्षेऽव्याप्तिवारणाय प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतु-विषयताविशिष्टान्यत्वज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभया-भाववत्त्वं साध्याभावत्वावच्छिन्नविषयिताविशिष्टान्यत्वरूपं परिष्क-र्तव्यम् , साध्याभावत्वावच्छिन्नविषयतावैशिष्ट्यम्-स्वविशिष्टविषयिता-विशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वनि-ष्ठावच्छेदकताकप्रतिबन्धकतावच्छेदकत्वोभयसम्बन्धेन । विषयितायां स्व-वैशिष्ट्यं च स्वनिरूपितव्यापकत्वप्रकारतानिरूपितप्रकारतावच्छेदकाव-च्छिन्नत्वस्वनिरूपितसामानाधिकरण्यप्रकारतानिरूपितत्वोभयसम्बन्धेन । विषयितावैशिष्ट्यं च स्वनिरूपितत्वतादात्म्यान्यतरसम्बन्धेन । द्वितीय-सम्बन्धप्रविष्टस्वनिष्ठप्रतिबन्धकतावच्छेदकता स्वनिरूपितव्यापकत्वप्रकार-तानिरूपितप्रकारतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकाव-च्छिन्नविशेष्यताकत्वस्वनिरूपकनिश्चयविशिष्टत्वोभयसम्बन्धावच्छिन्ना, तथा च नोक्तसत्प्रतिपक्षेऽव्याप्तिः । किञ्चिद्व्यापकसाध्याभावसामानाधिकरण्य-घटितसत्प्रतिपक्षविषयतायां प्रतिहेतुव्यापकसाध्याभावसामानाधिकरण्य-विषयितानिरूपितप्रतिहेतुविषयिताविशिष्टत्वरूपप्रथमसम्बन्धाभावेन किञ्चि-द्व्यापककाञ्चनमयत्वाभावादिघटितसत्प्रतिपक्षविषयतायां च तादृशसाध्या-भावविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वरूपद्वितीयसम्बन्धाभावेनो-क्तसत्प्रतिपक्षविषयितानां निरुक्तसम्बन्धद्वयेन साध्याभावत्वावच्छिन्न-विषयिताविशिष्टान्यत्वात् । जलव्यापकवह्न्यभावकालीनजलवह्न्य-भावव्याप्यव्याप्योभयवद्ध्रदे च नातिव्याप्तिः , तद्विषयतायाः प्रति-हेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयताविशिष्टान्यत्वेन ता-दृशसाध्याभावविषयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वेन चोक्तोभय-सम्बन्धेन साध्यभावत्वावच्छिन्नविषयताविशिष्टत्वेन तदन्यत्वाभावात् । न चैवं प्रतिहेतुतावच्छेदकघटितसाध्याभावाभाववद्वृत्तिमत्पक्षे-ऽतिव्याप्तिः , वह्न्यभावाभाववद्वृत्तिजलं जलवान् ह्रद इति ज्ञानयोरेकविशिष्यापरत्वेन प्रतिबन्धकतया तादृशविशिष्टविषयतायां उक्त-

ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वघटितोभयसम्बन्धेन साध्याभावविषयताविशिष्टान्यत्वाद्यनपायादिति वाच्यम्, वक्ष्यमाणरीत्या विशिष्टान्तराघटितत्वेन तस्य वारणीयत्वात्, अथवा पूर्वपक्षोक्तरीत्या यद्रूपावच्छिन्नविषयतायां त्रित्वावच्छिन्नाभावविलक्षणमेव युक्तम् । न चैवं अत्यन्ताभावगर्भव्यापकत्वोपादाने अन्योन्याभावगर्भव्यापकत्वघटितसत्प्रतिपक्षाव्याप्तिरिति वाच्यम्, सत्प्रतिपक्षो हि अत्यन्ताभावगर्भव्यापकताघटित एव, नत्वन्योन्याभावगर्भव्यापकताघटितोऽपि, तस्य विरोध्युन्नायकत्वेऽपि प्रतियोगिवैयधिकरण्यगर्भव्यापकताघटितरूपसमशीलत्वेन प्रकृतानुमितिविरोधित्वाभावात् । प्रतियोगिवैयधिकरण्यगर्भभेदगर्भव्यापकत्वयोः विशेषाभावात् । एतेनोक्तउभयसम्बन्धेन साध्याभावत्वावच्छिन्नविषयताविशिष्टान्यत्वं यद्रूपावच्छिन्नविषयतायान्निवेश्य उक्ताव्याप्त्यतिव्याप्त्योर्वारणेऽपि तद्व्यक्तित्वव्यापकपक्षवृत्तित्वकालीनतद्व्यक्तित्वपक्षवृत्तित्वव्याप्य—व्याप्योभयवत्साध्याभावादावतिव्याप्तिः ।

एवमुपनीतकाञ्चनमयत्वादिभानस्थले तद्व्यक्तित्वव्यापककाञ्चनमयत्वाभावकालीनतद्व्यक्तित्व काञ्चनमयत्वाभावव्याप्यव्याप्योभयवद्ध्रदादावतिव्याप्तिर्दुर्वारैवेति निरस्तम्, उक्तत्रित्वावच्छिन्नाभावस्य उक्तविशिष्टविषयितायामभावेनोक्तातिव्याप्तिविरहात् । वस्तुतस्तु प्रतिहेतुव्यापकसाध्याभावादिघटितसत्प्रतिपक्षविषयिताः ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताव्याप्यजनकतावच्छेदकत्वेनानुगमय्य ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वतद्व्याप्यजनकतावच्छेदकविषयताभिन्नत्वोभयाभाववत्त्वमेवोक्तविशेषणेन विवक्षितम्, स्वव्याप्यजनकतावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वावच्छेदकत्वोभयसम्बन्धेन ज्ञानवैशिष्ट्या—वच्छिन्नप्रतिबन्धकताविशिष्टान्यत्वं तादृशविषयितायां विशेषणमिति पर्यवसितम् । तथा च न काप्यव्याप्तिः । सत्प्रतिपक्षविषयिता—सामान्यस्योक्तोभयसम्बन्धेन ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताविशिष्ट—त्वाभावेन तदन्यत्वात् । उक्तोभयवद्भेदं च नातिव्याप्तिः, तद्विषयिताया उक्तोभयसम्बन्धेन प्रतिबन्धकताविशिष्टत्वेन तदन्यत्वाभावात् - एतेन यद्रूपावच्छिन्नविषयितायां प्रतिहेतुव्यापकसाध्याभावसमानाधिकरण-

प्रतिहेतुविषयिताविशिष्टान्यत्वज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदक-
त्वोभयाभावनिवेशे साध्याभावाभाववदवृत्तिमत्पक्षरूपसत्प्रतिपक्षाव्याप्तिः,
ह्रदो वह्निधूमोभयवानित्यादौ वह्न्यभावाभाववदवृत्तिव्यापको धूमाभावः
वह्न्यभावाभाववदवृत्तिमांश्च पक्ष इति ज्ञानयोरेकविशिष्टापरत्वेन प्रति-
बन्धकतया वह्न्यभावाभाववदवृत्तिमद्ध्रदविषयितायां निरुक्तोभयाभावा-
सत्वात् । न चोभयाभावप्रतियोगिकोटावनतिरिक्तवृत्तित्वरूपावच्छेदकस्यैव
निवेशान्नोक्ताव्याप्तिः, प्रत्येकज्ञानीयवह्न्यभावाभाववदवृत्तिमद्ध्रदविषयिताया
उक्तप्रतिबन्धकतातिरिक्तवृत्तित्वेन उक्तोभयाभाववत्वस्याक्षतत्वात्, जलव्या-
पकेत्याद्युक्तोभयवद्ध्रदे च नातिव्याप्तिः, तद्विषयितायां निरुक्तप्रति-
बन्धकतानतिरिक्तवृत्तित्वस्य निरुक्तविषयिताविशिष्टान्यत्वस्य च द्वयोरेव
सत्त्वेनोक्तोभयाभाववत्त्वस्य चाभावात् इति वाच्यम्, अभावविशिष्ट-
व्यापकसामान्यत्वाभावकालीनसामान्यत्वसाध्यकघटादिपक्षकस्थले समवा-
यसम्बन्धस्य व्याप्यताघटत्वे अभावविशिष्टव्यापकसामान्यत्वाभाव-
कालीनसामान्यत्वाभावाभाववदवृत्तिमद्घटरूपसत्प्रतिपक्षेऽव्याप्तिः, तत्र
अभावविशिष्टव्यापकस्सामान्यत्वाभावः अभावविशिष्टवांश्च ह्रद इति
ज्ञानयोरेकविशिष्टापरत्वेन प्रतिबन्धकतया निरुक्तसत्प्रतिपक्षविषयिताया-
निरुक्तप्रतिबन्धकतानतिरिक्तवृत्तित्वनिरुक्तविषयिताविशिष्टान्यत्वोभयव-
त्वादिति निरस्तम्, अभावविशिष्टव्यापकसामान्यत्वाभावकालीन-
सामान्यत्वाभावाभाववदवृत्तिमत्पक्षरूपसत्प्रतिपक्षविषयितायां ज्ञानवैशि-
ष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वसत्त्वेऽपि तद्व्याप्यजनकतावच्छेदक-
विषयताभिन्नत्वाभावेनोक्तोभयाभाववत्वस्य उक्तसम्बन्धद्वयेन प्रतिब-
न्धकताविशिष्टान्यत्वपर्यवसितस्याक्षतत्वेन तत्राव्याप्तिविरहात् । प्रतिहेतु-
व्यापकसाध्याभावसमानाधिकरणप्रतिहेतुविषयित्वानिरूपकत्वतादृशसाध्या-
भावविषयितानिष्ठपूर्वोक्तसम्बन्धद्वयावच्छिन्नावच्छेदकताकप्रतिबन्धकता-
वच्छेदकत्वोभयाभाववत्त्वस्य तत्रनिष्ठोक्तोभयसम्बन्धावच्छिन्नावच्छेदकताक-

प्रतिबन्धकतावच्छेदकत्वस्वविशिष्टविषयितानिरूपकत्वसम्बन्धावच्छिन्नस्व-
निष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन साध्याभावविषय-
ताविशिष्टान्यत्वपर्यवसितस्य यद्रूपावच्छिन्नविषयकनिश्चये निवेशे दोषा-
भावाच्च । तथाहि जलव्यापकेत्याद्युक्तोभयवद्ध्रदे नातिव्याप्तिः, तादृश-
विशिष्टविषयकनिश्चयस्य जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदवि-
षयत्वानिरूपकत्वेन तज्ज्ञानीयप्रतिबन्धकतायाः जलव्यापकवह्न्यभाववि-
षयकनिश्चयावच्छिन्नतया तादृशप्रतिबन्धकतावच्छेदकत्वाद्युक्तोभयाभाव-
वत्त्वस्य तादृशनिश्चयेऽभावात् । साध्याभाववदवृत्तिमत्पक्षे च नोक्तरीत्याव्या-
प्तिः, वह्न्यभावाभाववदवृत्तिव्यापको धूमाभाव इति निश्चयीयधूमाभाव-
विषयत्वानिष्ठपूर्वोक्तसम्बन्धावच्छिन्नावच्छेदकताकप्रतिबन्धकतावच्छेदक-
त्वस्य वह्न्यभावाभाववदवृत्तिव्यापको धूमाभाव इति निश्चये सत्त्वेऽपि
वह्न्यभावाभाववदवृत्तिमान् ह्रद इति निश्चये अभावेन तादृशनिश्चयस्योक्तो-
भयाभाववत्त्वात्तादृशनिश्चयमादायैव लक्षणसमन्वयात् । अभावविशिष्टव्या-
पकसामान्यत्वाभावकालीनसामान्यत्वसाध्यकस्थलीयसत्प्रतिपक्षेऽपि ना-
व्याप्तिः, अभावविशिष्टव्यापकसामान्यत्वाभावः — उत्तरज्ञानं अभाव-
विशिष्टव्यापकत्वांशेऽप्रमेति समूहालम्बनोत्तरकालीनतादृशसत्प्रतिपक्ष-
निश्चयमादायैव लक्षणसमन्वयात् । तत्र तादृशसत्प्रतिपक्षनिश्च-
यस्य स्वात्मकनिश्चयविशिष्टत्वेन न प्रतिबन्धकता, तस्याभाववि शि-
ष्टव्यापकत्वांशे अप्रामाण्यज्ञानानास्कन्दितत्वविरहात् । किन्त्वप्रामाण्य-
ज्ञानात्मकपूर्वनिश्चयविशिष्टत्वेनैवेति तादृशनिश्चयेऽभावविशिष्टव्यापकसा-
मान्यत्वाभावविषयितानिष्ठोक्तसम्बन्धावच्छिन्नावच्छेदकताकप्रतिबन्धकता-
वच्छेदकत्वाभावेनोक्तोभयाभावसत्त्वात् । अप्रामाण्यज्ञानानास्कन्दितत्व-
शरीरे च तद्व्यक्तिभिन्नाप्रामाण्यज्ञानानास्कन्दितत्वस्यैव निवेशेन तादृशा-
प्रामाण्यज्ञानास्कन्दितनिश्चयस्यापि लक्षणघटकत्वानपायात्, अप्रामाण्य-
ज्ञानाभावस्य पृथग्घेतुतामते तादृशनिश्चयस्य जनकत्वाच्च । किञ्च यथा-
श्रुतेऽपि न तत्राव्याप्तिः, तदभाववदवृत्तित्वरूपव्याप्तिशरीरवृत्तित्वाभाव-
स्याभावत्वेनानिवेशात्, अनुयोगिताविशेषसम्बन्धेन वृत्तित्वीयत्वेनैव निवे-

शात् साध्यीयत्वेन साध्याभावनिवेशनवत् , तथा च तादृशसाध्याभावाभाववन्निरूपितवृत्तित्वीयवद्वानिति ज्ञानसाधारण्यानुरोधेन ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वावश्यकत्वात् , तादृशसत्प्रतिपक्षविषयित्वस्य ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतातिरिक्तवृत्तित्वेनोक्तोभयाभावस्याक्षतत्वात् । अपि चात्र केवलसामान्यत्वाभावाभाववद्वृत्तिमत्पक्षस्यैव सत्प्रतिपक्षत्वं गदाधरानुमतम् , न तूक्तविशिष्टसाध्याभावाभाववद्वृत्तिमत्पक्षस्य , तादृशसत्प्रतिपक्षज्ञानस्य ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिराकरणाय हेतुतावच्छेदकघटनामसहमानस्य उक्तस्थले साध्यतावच्छेदकघटनायां ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतासम्पादिकायां अभ्युपगमासम्भवात् । अन्यथा सामान्यलक्षणे ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशे उक्तसत्प्रतिपक्षाऽव्याप्तिसम्भवेन तामुपेक्ष्य असाधारण्याऽव्याप्तिपर्यन्तानुधावनवैफल्यापत्तेः । एतेन वृत्तित्वीयविशिष्टव्यापकसामान्यत्वाभावकालीनसामान्यत्वसाध्यकतादृशसत्प्रतिपक्षाऽव्याप्तिः , वृत्तित्वीयविशिष्टव्यापकसामान्यत्वाभाव:-वृत्तित्वीयविशिष्टवांश्च घट इति ज्ञानसाधारणज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तित्वस्य वृत्तित्वीयविशिष्टव्यापकसामान्यत्वाभावकालीनसामान्यत्वाभावाभाववद्वृत्तिमद्घटविषयतायामक्षतत्वादिति निरस्तमित्याहुः ।

परेतु विरोध्यनुमितिनिरूपितयत्किञ्चिज्जनकताऽव्यापकत्वं सत्यन्तघटकप्रतिबन्धकतायां निवेश्यम्,तथा च स्वविशिष्टप्रतिबन्धकतावत्वस्वाश्रयत्वोभयसम्बन्धेन यद्रूपावच्छिन्नविषयिताऽव्यापिका विरोध्यनुमितिजनकता तद्रूपावच्छिन्नत्वमिति लक्षणार्थः पर्यवसितः। प्रतिबन्धकतायां स्ववैशिष्ट्यञ्च स्ववृत्तिप्रतिबध्यतानिरूपितत्वस्वव्यापकत्वस्वावच्छेदकचरमप्रकारत्वावच्छिन्नत्वैतत्त्रितयसम्बन्धेन , प्रतिबध्यतायां स्ववृत्तित्वं च स्वावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपित प्रतिबन्धकतावच्छेदकविषयत्वावच्छि

त्र जलव्यापकवह्न्यभावकालीनजलवह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽपि नातिव्याप्तिः, जलव्यापकवह्न्यभावकालीनजलवद्ध्रदविषयकत्वावच्छिन्नप्रतिबन्धकतायास्सत्प्रतिपक्षज्ञानीयजनकताव्यापकत्वेऽपि स्वपदग्राह्यवह्न्यभावव्याप्यव्याप्यवद्ध्रदविषयकत्वावच्छिन्नजनकताव्यापकत्वाभावेनोक्तोभयसम्बन्धेन जनकताया उक्तोभयवद्ध्रदत्वावच्छिन्नविषयिताव्यापकत्वाभावात् । जलं वृत्तित्वाभाववदित्यत्र जलव्यापकवृत्तित्वव्याप्यसमानाधिकरणजलवज्जलरूपसत्प्रतिपक्षोन्नायकेऽपि नातिव्याप्तिः, तत्र सत्प्रतिपक्षोन्नायकज्ञानीयजनकताव्यापकत्वस्य तद्घटकबाधप्रतिबन्धकतायां सत्त्वेऽपि स्वावच्छेदकचरमप्रकारत्वावच्छिन्नत्वाभावात्, तत्र व्यापकत्वविशेष्यतानिरूपितजलप्रकारतानिरूपितजलत्वनिष्ठनिरवच्छिन्नप्रकारताया एव चरमतया तदवच्छिन्नत्वस्य वृत्तिजलत्वावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबन्धकतायामसत्त्वात् । एकरूपेण जनकतापक्षे स्वव्यापकत्वस्याप्युक्तप्रतिबन्धकतायामसत्त्वात् । शैवालव्यापकवृत्तित्वव्याप्यसमानाधिकरणशैवालवज्जलमिति ज्ञानेऽप्युक्तजनकतायास्तत्त्वेनोक्तबाधप्रतिबन्धकतया असत्त्वात् । न च वृत्तित्वं तादात्म्यसम्बन्धावच्छिन्नत्वाभाववदित्यत्र तादात्म्यसम्बन्धेन तद्व्यक्तिव्यापकतादात्म्यसम्बन्धावच्छिन्नत्वव्याप्यवन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितावत्तद्व्यक्तिमद्वृत्तित्वरूपे सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिः, अनुगतरूपेण जनकत्वाङ्गीकारेऽपि सम्बन्धभेदेन जनकताया भिन्नतया तादात्म्यसम्बन्धावच्छिन्नवृत्तित्वविषयिताघटितधर्मावच्छिन्नजनकताव्यापकत्वस्य उक्तस्थलीयबाधप्रतिबन्धकतायां सत्त्वादिति वाच्यम्; स्वावच्छेदकीभूता या व्यापकत्वनिष्ठविशेष्यतानिरूपिततद्व्यक्तिनिष्ठप्रकारतानिरूपिततद्व्यक्तित्वनिष्ठनिरवच्छिन्नप्रकारता तदवच्छिन्नत्वस्य उक्तप्रतिबन्धकतायामसत्त्वात् । स्वावच्छेदकधर्म—

सम्बन्धोभयावच्छिन्नत्वस्वनिरूपितव्यापकत्वप्रकारतानिरूपितसाध्याभाव-
प्रकारतानिरूपितसामानाधिकरण्यप्रकारतानिरूपिततत्त्वोभयसम्बन्धेन प्रका-
रताविशिष्टप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चय-
त्वेनानुगतरूपेण जनकत्वे सम्बन्धभेदेन जनकताभेदानावश्यकत्वाच्च ।
ह्रदो वह्निमान् धूमादित्यत्र वह्न्यभावव्याप्यव्याप्यवह्न्यभाववद्ध्रदे नातिव्या-
प्तिः, एकरूपेण जनकतापक्षे जनकताव्यापकत्वस्य प्रतिबन्धकतायामस-
त्त्वात्, स्वावच्छेदकचरमप्रकारत्वावच्छिन्नत्वस्य विरहाच्च । प्रकारतायां
चरमत्वं धर्मितावच्छेदकताभिन्नत्वे सति तदनवच्छिन्नत्वे सति वा निरव-
च्छिन्नत्वम्, तेन तत्र बाधप्रतिबन्धकतायास्तादृशजनकतावच्छेदकीभूतनिर-
वच्छिन्नवह्नित्वादिनिष्ठप्रकारत्वावच्छिन्नत्वेऽपि नोक्तसत्प्रतिपक्षोन्नायकेऽति-
व्याप्तिः । तादृशप्रतिबन्धकतावच्छेदकीभूतवह्नित्वनिष्ठनिरवच्छिन्नप्रकार-
ताया वह्न्यभावव्याप्यव्याप्यत्वनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकतारूप-
त्वात्तदवच्छिन्नत्वाद्वा । उक्तपरिष्कारस्यानुगमस्तु—जनकतावृत्तिरूपवत्त्वं स-
त्प्रतिपक्षत्वम्, जनकतावृत्तित्वं तु स्वसमानाधिकरणभेदप्रतियोगितावच्छेदक-
त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन,
स्वाधिकरणता स्वावच्छिन्नविषयितावत्त्वसम्बन्धावच्छिन्ना, भेदप्रतियोगिता-
वच्छेदकता स्वविशिष्टप्रतिबन्धकतावत्त्वस्वाश्रयत्वोभयसम्बन्धावच्छिन्ना ।
प्रतिबन्धकतायां स्ववैशिष्ट्यञ्च पूर्वोक्तसम्बन्धत्रयेणेति । अथवा सत्यन्त-
घटकप्रतिबन्धकतायां विरोध्यनुमितिनिरूपितयत्किञ्चिज्जनकताव्यापकत्वे
सति तादृशजनकतावच्छेदकतावच्छेदकविषयितात्वव्यापकावच्छेदकता-
कत्वं निवेश्यम्, तथा च पूर्वोक्तभेदप्रतियोगितावच्छेदकता स्वविशिष्ट-
प्रतिबन्धकतावत्त्वस्वाश्रयत्वोभयसम्बन्धावच्छिन्ना । प्रतिबन्धकतायां स्ववै-
शिष्ट्यञ्च स्ववृत्तिप्रतिबध्यतानिरूपितत्वस्वसमानाधिकरणभेदप्रतियोगिता-
वच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभ-

यसम्बन्धेन। स्वाधिकरणता स्वावच्छेदकसामानाधिकरण्यविषायताभिन्नपरम्परासम्बन्धानवच्छिन्नप्रकारतात्वस्वाश्रयत्वान्यतरसम्बन्धावच्छिन्ना, भेदप्रतियोगितावच्छेदकता स्वावच्छेदकत्वस्वाश्रयत्वान्यतरसम्बन्धावच्छिन्नेति। तथा च जलव्यापकवह्न्यभावकालीनजलवह्न्यभावव्याप्यव्याप्योभयवद्ध्रदे नातिव्याप्तिः, एकरूपेण प्रतिबन्धकतापक्षे वह्न्यभावव्याप्यव्याप्यवद्ध्रदत्वावच्छिन्नविषयित्वावच्छिन्नजनकतावच्छेदकविषयताव्यापकावच्छेदकताकत्वस्य तादृशप्रतिबन्धकतायां सत्त्वेऽपि तादृशजनकताव्यापकत्वविरहात् । वृत्तित्वं तादात्म्यसम्बन्धावच्छिन्नत्वाभाववदित्यत्र सत्प्रतिपक्षोन्नायकेऽपि नातिप्रसङ्गः, तत्र तद्घटकबाधप्रतिबन्धकतायां तादृशजनकताव्यापकत्वसत्त्वेऽपि तादृशजनकतावच्छेदकविषयितात्वव्यापकतावच्छेदकताकत्वविरहात् । एतेन स्वावच्छेदकचरमप्रकारत्वावच्छिन्नत्वघटितसम्बन्धत्रयेण प्रतिबन्धकतायां स्वविशिष्टत्वनिवेशे वह्न्यभाववद्ध्रदकालीनजलव्यापकवह्न्यभावव्याप्यसमानाधिकरणतादृशजलवद्ध्रदेऽतिव्याप्तिः, तत्र बाधप्रतिबन्धकतायां जनकतावच्छेदकचरमप्रकारत्वावच्छिन्नत्वस्य भिन्नरूपेण जनकतापक्षे तादृशजनकताव्यापकत्वस्य च सत्त्वादिति निरस्तम्, तादृशजनकतावच्छेदकविषयितात्वव्यापकावच्छेदकताकत्वविरहेणोक्तपरिष्कारेऽतिव्याप्तिविरहादिति ।

यत्तु विरोध्यनुमितिनिरूपितयत्किञ्चिज्जनकताव्यापकत्वं सत्यन्तघटकप्रतिबन्धकतायां निवेश्यते, तथा च स्वनिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावत्वस्वविशिष्टप्रतिबन्धकतावत्त्वोभयसम्बन्ध एव प्रतिबध्यतावृत्तिरूपवत्वरूपानुगतसत्प्रतिपक्षलक्षणघटकव्यापकताघटकप्रतियोगितावच्छेदकतावच्छेदकसम्बन्धः । स्वविशिष्टत्वञ्च स्वनिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकताविशिष्टत्वस्वावच्छेदकावच्छिन्नप्रतिबद्ध्यतानि-

रूपितत्वोभयसम्बन्धेन, जनकताविशिष्टत्वञ्च स्वसमानाधिकरणभेदप्रति-योगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेद-वत्त्वसम्बन्धेन । विशेष्यदळन्तु जलव्यापकवह्न्यभावकालीनजलवद्ध्रदे-ऽतिव्याप्तिवारणाय, तथा च वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदे नातिव्याप्तिः । अत्र बाधप्रतिबन्धकतायां तज्ज्ञाननिष्ठजनकताव्यापकत्वा-भावादित्याशङ्क्य, ह्रदो वह्निमानित्यत्रैव जलव्यापकवह्न्य-भावकालीनजलवह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽतिव्याप्तिः । तज्ज्ञाननिष्ठ-ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायास्सत्प्रतिपक्षज्ञानीयजनकताव्यापक-त्वात्, यज्जनकताव्यापकत्वं प्रतिबन्धकतायां तज्जनकतानतिरिक्तवृत्तित्व विवक्षणेऽपि जलं वृत्तित्वाभाववदित्यादिस्थलीयसत्प्रतिपक्षोन्नायके एकरूपेण जनकतापक्षे वृत्तित्वं तादात्म्यसम्बन्धावच्छिन्नत्वाभाववदित्यत्र सत्प्रतिप-क्षोन्नायके चातिव्याप्तिरिति दूषितम्, तदप्येतेन निरस्तम्; उक्तस्थले प्रतिबन्धकतायां तादृशजनकतावच्छेदकचरमप्रकारत्वावच्छिन्नत्वस्य तादृ-शजनकतावच्छेदकविषयितात्वव्यापकतावच्छेदकत्वस्य चाभावात् । किञ्च भवदुक्तानुगमोपरि जलव्यापकवह्न्यभावकालीनजलवह्न्यभावव्याप्यव्याप्यो-भयवद्ध्रदेऽतिव्याप्तिरेव न लगति, तत्र स्वपदेन बाधप्रतिबद्ध्यत्वोपादाने तादृशप्रतिबद्ध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमिति-निष्ठजन्यतानिरूपितजनकताया उक्तोभयवद्ध्रदविषयकनिश्चये विरहात् । स्वपदेन सत्प्रतिपक्षज्ञानीयप्रतिबद्ध्यत्वोपादाने तादृशप्रतिबद्ध्यतानिरूपित-प्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनक-तावत्वस्य तादृशनिश्चये सत्त्वेऽपि स्वनिरूपितप्रतिबन्धकतावच्छेदकविषयि-त्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकताविशिष्टत्वस्वावच्छेदकाव-च्छिन्नप्रतिबद्ध्यतानिरूपितत्वोभयसम्बन्धेन स्वविशिष्टप्रतिबन्धकतावत्वस्य तादृशनिश्चयेऽसम्भवात् । स्वपदेन सत्प्रतिपक्षोन्नायकज्ञानीयजनकताया

एव सङ्गृहीततया, तद्व्यापकत्वस्य उक्तज्ञानविशिष्टज्ञाननिष्ठप्रतिबन्धकताया-मसत्त्वादिति । यदपि वृत्तित्वं तादात्म्यसम्बन्धावच्छिन्नत्वाभाववदित्यत्र सत्प्रतिपक्षोन्नायकातिव्याप्तिवारणाय प्रतिबन्धकतानिरूपितानतिरिक्तवृत्ति-त्वस्वरूपसम्बन्धरूपोभयविधावच्छेदकत्वस्य यद्रूपावच्छिन्नविषयितायां नि-वेशः, उक्तसत्प्रतिपक्षोन्नायकविषयितायाः बाधज्ञानप्रतिबन्धकतानिरूपित-स्वरूपसम्बन्धरूपावच्छेदकत्वविरहेण नातिव्याप्तिरित्याशङ्क्य, तादृशस्थल एव साध्याभावसाध्याभावव्याप्यव्याप्योभयवत्पक्षेऽतिव्याप्तेरुक्तविवक्षणं न सम्भवतीति दूषितम्; तन्न, उन्नायकदलप्रविष्टजनकताव्यापकत्वस्य प्र-तिबन्धकतायां निविष्टतयैव ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतामादाय ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ध्रदरूपसत्प्रतिपक्षोन्नायका-तिव्याप्त्यप्रसक्तेः । वृत्तित्वं तादात्म्यसम्बन्धावच्छिन्नत्वाभाववदित्यादि-स्थलीयसत्प्रतिपक्षोन्नायकातिव्याप्तेश्च—प्रतिबन्धकतानिरूपितस्वरूपसम्बन्ध-रूपावच्छेदकत्वनिवेशेनैव वारणेनानतिरिक्तवृत्तित्वनिवेशस्य निष्फलत्वेन शङ्काया अयुक्तत्वात् । उक्ततादात्म्यसम्बन्धावच्छिन्नत्वाभावसाध्यकस्थले साध्याभावसाध्याभावव्याप्यव्याप्योभयवत्पक्षेऽतिव्याप्त्या दूषणमप्ययु-क्तम्, उक्तोभयवत्पक्षस्य जनकत्वप्रतिबन्धकत्वघटितविशिष्टान्तरत्वाक्रा-न्तेन तादृशसत्प्रतिपक्षोन्नायकेन घटितत्वेनैव वारणात्, विशिष्टान्तराघटित-त्वशरीरे प्रतिबन्धकतानिरूपितोभयविधावच्छेदकत्वनिवेशस्य उक्तविशिष्टा-तिव्याप्तिसम्पादकस्य विवक्षणानर्हत्वात् । अनतिरिक्तवृत्तित्वमात्रस्यैव तत्र निवेशनीयत्वादिति वदन्ति । इदन्तु न युक्तम्, प्रतियोगिवैयधिकरण्य-गर्भतदगर्भव्याप्तिज्ञानयोरनुगतरूपेण जनकतया जनकताव्यापकत्वस्य प्र-तिबन्धकतायामभावेन व्यापकताघटितसत्प्रतिपक्षेऽव्याप्तेरिति ।

इदन्तु तत्त्वम्; स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकयत्कि-ञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकत्वस्य जनकतायां निवेशान्नोक्तातिव्याप्तयः, स्वावच्छिन्नाविषयकप्रतीतिविषयितावच्छेदकसाध्याभावव्याप्यवत्पक्ष—तावच्छेदकावच्छिन्नविषयित्वाव्यापकत्वस्य निरुक्तविशिष्टविषयिताव्यापक-

जनकतायामभावात् । न च सत्प्रतिपक्षज्ञानस्यानुगतरूपेण साध्याभावानुमितिजनकत्वस्वीकर्तृमते असम्भवः, स्वावच्छिन्नाविषयकप्रतीतिविषयितावच्छेदकशैवालव्यापकवह्न्यभावसमानाधिकरणशैवालवद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकत्वस्य जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयनिश्चयीयजनकतायामसत्त्वात् । एकसम्बन्धेन साध्याभाववदवृत्तिमत्पक्षविषयिकनिश्चयीयजनकतायामन्यसम्बन्धेन साध्याभावाभाववदवृत्तिमत्पक्षरूपविशिष्टान्तरविषयित्वाव्यापकत्वस्याभावाच्च, एतेनोक्तविवक्षणे व्यापकताघटितसत्प्रतिपक्षमात्रेऽव्याप्त्यभिधानं केषाञ्चिदनादेयम्, उक्तरीत्या असम्भवस्यैव प्रसङ्गादिति वाच्यम्; स्वावच्छिन्नविषयकत्वाव्यापकविषयिताशून्यज्ञानीयत्वस्य विशिष्टान्तविषयतायां निवेशेनैवोक्तासम्भवाभावात् । शैवालव्यापकवह्न्यभावसमानाधिकरणशैवालवद्ध्रदविषयताया जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वाभावात् । संयोगेन साध्याभावाभाववदवृत्तिमत्पक्षविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्य सम्बन्धान्तरेण तद्विशिष्टपक्षविषयितायामभावाच्च ।

यत्तूक्तरीत्या विशिष्टान्तराघटितत्वनिवेशने वह्न्यभावव्यापकं यज्जलव्यापकवह्न्यभावसमानाधिकरणजलं तत्समानाधिकरणवह्न्यभाववद्ध्रदात्मके सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिः; तज्ज्ञानीयजनकतायाः निरुक्तविशेषणाक्रान्तविशिष्टान्तरविषयित्वाव्यापकत्वात्, उक्तविशिष्टविषयितायाः बाधज्ञानीयप्रतिबन्धकतावच्छेदकत्वाच्चेति । तन्न, विशिष्टान्तरविषयित्वाव्यापकस्वविषयिताव्यापकप्रतिबन्धकताकत्वस्यापि विशेषणस्य सत्त्वेन तेनैव तादृशसत्प्रतिपक्षोन्नायकस्य वारणात् । तज्ज्ञाननिष्ठबाधप्रतिबन्धकताया वह्न्यभाववद्ध्रदरूपविशिष्टान्तरविषयिताव्यापकत्वेन तदव्यापकप्रतिब-

विषयिताशून्यज्ञानीयत्वं विशेषणम् , तेन व्यापकताघटितसत्प्रतिपक्षज्ञा--
नीयप्रतिबन्धकतायाः जलव्यापकत्वह्न्यभावकालीनजलवद्ध्रदरूपविशिष्टवि--
षयिताव्यापकत्वेऽपि न क्षतिः ।

यत्तु स्वावच्छिन्नानिरूपितविशिष्टविषयित्वाव्यापकत्वस्य प्रतिबन्ध-
कताविशेषणतयैव निर्वाहे जनकत्वप्रतिबन्धकत्वोभयस्मिन् विशिष्टान्तर-
विषयित्वाव्यापकत्वविशेषणं व्यर्थमिति । तन्न, साध्याभावाभाववदवृ-
त्तिमत्पक्षे प्रतिहेतुतावच्छेदकघटितेऽतिव्याप्तेः । वह्न्यभावाभाववदवृत्तिजलं
जलवान् ह्रद इति ज्ञानयोः ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया तादृश-
प्रतिबन्धकतायाः जलत्वाघटितवह्न्यभावाभाववदवृत्तिमत्पक्षविषयित्वा-
व्यापकत्वात् । विशिष्टान्तरविषयित्वाव्यापकजनकताकत्वस्यापि निवेशे च
तत्र नातिप्रसङ्गः, जलत्वादिविषयितामनन्तर्भाव्य वह्न्यभावाभाववदवृत्ति-
मत्पक्षादिविषयकज्ञानत्वेनैव जनकतया तादृशजनकतायाः स्वावच्छिन्नवि-
षयित्वाव्यापकविषयिताशून्यज्ञानीयं यद्विशिष्टान्तविषयित्वं तादृशस्य व-
ह्न्यभावाभाववदवृत्तिमत्पक्षादिविषयित्वस्य व्यापकतया तदव्यापकजनकता-
त्वाभावात् । नच साध्याभावाभाववद्वृत्तित्वाभावसाध्याभावाभाववद्वृ-
त्तित्ववद्भेदज्ञानयोस्साध्याभावाभाववदवृत्तित्वप्रकारतानिरूपितहेतुताव —
च्छेदकावच्छिन्नविशेष्यताशालिबुद्धिप्रतिबन्धकतावच्छेदकविषयिताशालि-
निश्चयत्वेन अनुगतरूपेण जनकतायाः केवलान्वयिग्रन्थसिद्धत्वेन प्रतिहेतु
तावच्छेदकघटितोक्तसत्प्रतिपक्षेऽतिव्याप्तिर्दुर्वारैव, उक्तजनकतायाः केवल-
साध्याभावाभाववदवृत्तिमत्पक्षज्ञानसाधारण्यविरहेण विशिष्टान्तरविषयि-
त्वाव्यापकत्वस्य स्वविषयिताव्यापकजनकतायामक्षतत्वात् , तथा च वि-
शिष्टान्तराघटितत्वेन न तद्वारणसम्भव इति, परामर्शे तादृशविशिष्टविष-
यकत्वं निवेश्यैव वारणीयमिति विशिष्टान्तराघटितत्वशरीरे जनकतायां
विशिष्टान्तरविषयित्वाव्यापकत्वनिवेशनमनर्थकमिति वाच्यम्,—विशिष्टा-

न्तरविषयित्वाव्यापकत्वं हि विशिष्टान्तरविषयितासमानाधिकरणभेदप्रति-
योगितावच्छेदकत्वम्, भेदप्रतियोगितावच्छेदकता च-स्वनिरूपितजन्यताव-
च्छेदकावच्छिन्नजन्यतानिरूपितजनकतावत्त्वसम्बन्धावच्छिन्ना, तथा च हेतु-
तावच्छेदकाघटितज्ञानीयजनकत्वतद्घटितज्ञानीयजनकत्वयोर्भेदेऽपि तयोरेक-
धर्मावच्छिन्नजन्यतानिरूपितत्वेन निरुक्तसम्बन्धेन विशिष्टान्तरविषयित्वाव्या
पकत्वाविरहात्, हेतुतावच्छेदकघटितविशिष्टज्ञानीयजनकताया अप्युक्तसम्ब-
न्धेन हेतुतावच्छेदकाघटितसाध्याभावाभाववदवृत्तिमत्पक्षज्ञानसाधारण्यात्।
एवं वह्न्यभावव्याप्यव्याप्यवन्यभाववान् ह्रद इति ज्ञानस्य वह्न्यभावव्याप्य-
व्याप्यवह्न्यभावत्वावच्छिन्नप्रकारत्वघटितेन विशिष्टवह्न्यभावांशे भ्रमत्वग्रहा-
भावघटितेन च रूपेण पृथक्प्रतिबन्धकत्वस्य जगदीशेन व्यवस्थापितत्वेन
तत्पक्षेऽपि न वह्न्यभावव्याप्यव्याप्यवह्न्यभाववद्ध्रदेऽतिव्याप्तिः। विशि-
ष्टान्तरविषयितासमानाधिकरणभेदप्रतियोगितानिरूपिता या स्वनिरूपित-
प्रतिबद्ध्यतावच्छेदकावच्छिन्नप्रतिबद्ध्यतानिरूपितप्रतिबन्धकतावत्त्वसम्ब-
न्धावच्छिन्नावच्छेदकता तस्या एव विशिष्टान्तरविषयित्वाव्यापकत्वपदार्थ-
त्वात्। अनयैव रीत्या सामान्यलक्षणे मेयत्वविशिष्टं यद्धूमाभाववद्वृत्तित्वं
तत्प्रकारकवह्नित्वावच्छिन्नविशेष्यकनिश्चयत्वेन पृथक्प्रतिबन्धकत्वे तत्रातिव्याप्तिर्वारणीया, तादृशप्रतिबन्धकतायास्स्वरूपसम्बन्धेन विशिष्टान्तरविष-
यित्वाव्यापकत्वेऽप्युक्तसम्बन्धेन विशिष्टान्तरविषयित्वाव्यापकत्वाविरहात्।
न चैवं जनकतायां विशिष्टान्तरविषयित्वाव्यापकत्वनिवेशनमफलम्, प्रति-
हेतुतावच्छेदकघटितसाध्याभावाभाववदवृत्तिमत्पक्षस्यापि विशिष्टान्तरवि-
षयितासमानाधिकरणभेदप्रतियोगितानिरूपिता या स्वनिरूपितप्रतिबद्ध्यता-
वच्छेदकावच्छिन्नप्रतिबद्ध्यतानिरूपितप्रतिबन्धकतावत्त्वसम्बन्धावच्छिन्ना-
वच्छेदकता तदाश्रयप्रतिबन्धकताकत्वाभावादेव वारणात्, केवलसाध्या-
भावाभाववदवृत्तिमान् पक्ष इति ज्ञानस्यापि साध्यवत्ताबुद्धिप्रतिबन्धकत्वा-

ते वाच्यम्, वह्न्यभाववद्वह्न्यभावव्याप्यव्याप्यवद्वृत्तिवह्न्यभावव्याप्य-
ाप्यवद्ध्रदरूपविशिष्टेऽतिव्याप्तिवारणाय तदावश्यकत्वात् । तत्र प्रतिब-
कतायां विशिष्टान्तरविषयित्वाव्यापकत्वानपायात् । वस्तुतो विशिष्टा-
रविषयित्वाव्यापकत्वं प्रतिबन्धकतायां स्वरूपसम्बन्धेनैव वाच्यम्, न-
रूसम्बन्धेन, तथा सति बाधघटितसत्प्रतिपक्षाव्याप्तिप्रसङ्गात्, तत्र
धविषयितासमानाधिकरणभेदप्रतियोगितानिरूपितस्वरूपसम्बन्धावच्छि-
वच्छेदकताश्रयत्वस्य सत्प्रतिपक्षप्रतिबन्धकतायां सत्वेऽपि निरुक्तसम्ब-
ावच्छिन्नतादृशप्रतियोगितावच्छेदकत्वविरहात् । एवमभावव्यापकगग-
भाववदभाववत्कालीनगगनाभावसमानाधिकरणाभाववद्घटे घटो गगना-
ववदभाववत्कालीनगगनवानित्यादिस्थलीयसत्प्रतिपक्षेऽव्याप्तिश्च, तत्राभा-
ान् गगनाभाववान् अभाववांश्च घट इति निश्चययोरेकविशिष्टा-
त्वेन प्रतिबन्धकतया निरुक्तसम्बन्धेन गगनाभाववदभाववत्कालीनगग-
भावसमानाधिकरणाभाववद्घटरूपविशिष्टान्तरविषयित्वाव्यापकत्वस्य स-
तिपक्षीयप्रतिबन्धकतायामभावात् । न च तत्र सत्प्रतिपक्षज्ञानस्य पृथ-
प्रतिबन्धकत्वे मानाभावात् स्वरूपसम्बन्धेन विशिष्टान्तरविषयित्वा-
ापकत्वनिवेशेऽप्यव्याप्तिर्दुर्वारैवेति वाच्यम्, मेयत्वव्यापको गगनाभाव-
दभाववत्कालीनगगनाभावः--मेयत्ववांश्च घट इति ज्ञानयोः पृथक्प्रति-
धकत्वस्यावश्यकतया एकरूपेण प्रतिबन्धकतापक्षे तादृशप्रतिबन्धकता-
उक्तसत्प्रतिपक्षज्ञानसाधारण्यात् स्वरूपसम्बन्धेन व्यापकत्वनिवेशे
षाभावात् । एवञ्च प्रतिहेतुतावच्छेदकघटितसाध्याभावाभाववदवृत्ति-
पक्षेऽतिव्याप्तिवारकतयैव विशिष्टान्तरविषयित्वाव्यापकजनकतावत्वं वि-
ाष्टान्तरघटितत्वशरीरे निवेशनीयम् । अत्र प्रकारकोटावधिकपदार्थविष-
कनिश्चयस्य पृथक्प्रतिबन्धकतापक्षे वह्न्यभावव्याप्यव्याप्यवह्न्यभाववद्ध्रदे-
तेऽव्याप्तिस्तु यद्रूपावच्छिन्नविषयितायां तादृशविषयिताभिन्नत्वं निवेश्य

वारणीया । सामान्यलक्षणेऽपि स्वरूपसम्बन्धेनैव विशिष्टान्तविषयित्वाव्यापकत्वं निवेश्यम्, नतूक्तसम्बन्धेन, पूर्वोक्तदोषस्य सामान्यलक्षणेऽप्यविशेषात् । प्रकारकोटावधिकपदार्थावगाहिनिश्चयस्य पृथक्प्रतिबन्धकतापक्षे प्रकारकोटावधिकपदार्थघटितस्यापि दोषत्वात् । धर्मितावच्छेदककोटावधिकपदार्थघटितस्यैव तैर्दोषत्वानुपगमात् । अतएव मेयत्वविशिष्टव्यभिचारादाविति प्रतीकमुपादाय व्याख्यातं जगदीशेन–अत्र मेयत्वविशिष्टं यद्व्यभिचारादिसाधनं तत्रत्येत्यर्थः कार्यः नतु मेयत्वविशिष्टं यद्व्यभिचारित्वं तद्वति साधन इत्यर्थः, तादृशस्य लक्ष्यत्वात्, साधनधर्मिकप्रमेयत्वविशिष्टव्यभिचारित्वप्रकारकनिश्चयत्वेनापि व्याप्तिबुद्धौ स्वातन्त्र्येण प्रतिबन्धकत्वात्, इत्यादिना । तथा च निरुक्तविशिष्टान्तराघटितत्वविरहान्नोक्तोभयवद्ध्रदादावतिव्याप्तिरिति दिक् ।

ननु वह्न्यभाववान् ह्रदो वह्निमानित्यत्र प्रकृतानुमित्यप्रसिद्ध्या सत्प्रतिपक्षाव्याप्तिरिति चेन्न, प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिज्ञानत्वव्यापकप्रतिबद्ध्यताया एव निवेशात्, व्यापकत्वञ्च स्वावच्छेदकाभावप्रतियोग्युपहितत्वस्वाश्रयत्वान्यतरसम्बन्धेन, तथा चाहार्यज्ञाने स्वरूपसम्बन्धेन प्रतिबद्ध्यताविरहेऽपि प्रतिबद्ध्यतायाः अनाहार्यत्वाद्यवच्छिन्नतया स्वावच्छेदकाभावप्रतियोग्याहार्यत्वादिमत्तासम्बन्धेन तत्सत्त्वेन तादृशज्ञानत्वव्यापकप्रतिबद्ध्यतायाः प्रसिद्धेः, वह्न्यभाववान् ह्रदो वह्निमानित्यत्र तादृशाहार्यज्ञानमादायैव लक्षणसमन्वयः, वह्निमान् निर्वह्निरित्यत्र धर्मितावच्छेदकनिष्ठप्रत्यासत्त्याप्रतिबद्ध्यप्रतिबन्धकभावकल्पनाद्घटो वह्न्यभाववानित्यादिज्ञाननिष्ठप्रतिबद्ध्यतामादाय लक्षणसमन्वयः, तादृशप्रतिबद्ध्यतायाः स्वावच्छेदकाभावप्रतियोग्याहार्यत्ववत्त्वसम्बन्धेन वह्निमान् निर्वह्निमानिति ज्ञाने सत्त्वात्, दीधित्याद्यनुरोधेन तु यद्रूपावच्छिन्नविषयकनिश्चयोत्तरानुमिति-

सामान्ये पक्षे साध्यवैशिष्ट्यावगाहित्वाभावो विषयिताप्रयुक्तस्तद्रूपावच्छिन्नत्वे सति पक्षविशेष्यतानिरूपितपक्षतावच्छेदकप्रकारत्वाभावत्ववृत्तिसाध्यविशेष्यतानिरूपितसाध्यतावच्छेदकप्रकारत्वाभावत्ववृत्तियत्पक्षसाध्यवैशिष्ट्यावगाहित्वाभावत्ववृत्तिरूपं तादृशरूपावच्छिन्नविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका यद्रूपावच्छिन्नविषयिता तद्रूपावच्छिन्नत्वस्य लक्षणार्थत्वात्, प्रथमवृत्तिताद्वयं स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसम्बन्धेन, स्वाधिकरणत्वं च स्वावच्छिन्नविषयताशालिनिश्चयाव्यवहितोत्तरानुमितित्वसम्बन्धावच्छिन्नम्, अभावप्रतियोगिताविषयिताप्रयुक्ताधिकरणत्वसम्बन्धावच्छिन्ना, चरमवृत्तित्वं स्वसमानाधिकरणेत्यादिव्यापकत्वसम्बन्धेन, स्वाधिकरणता स्वावच्छिन्नविषयताशालिनिश्चयोत्तरानुमितित्वसम्बन्धेन, भेदप्रतियोगितावच्छेदकता विषयताप्रयुक्ताधिकरणत्वसम्बन्धावच्छिन्ना, तथा च वह्न्यभाववान् ह्रदो वह्निमानित्यत्र सत्प्रतिपक्षनिश्चयोत्तरानुमितिसामान्ये विषयिताप्रयुक्तस्य पक्षसाध्यवैशिष्ट्यावगाहित्वाभावस्य सत्त्वात्सत्यन्तवत्त्वात्, बाधनिश्चयोत्तरानुमितिसामान्ये पक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावसाध्यतावच्छेदकवैशिष्ट्यावगाहित्वाभावयोर्विषयिताप्रयुक्तयोरभावेन पक्षसाध्यवैशिष्ट्यावगाहित्वाभावस्य विषयिताप्रयुक्तस्य सत्त्वेन च बाधत्वस्य तादृशत्वेन तदवच्छिन्नोन्नायकत्वाच्च लक्षणसङ्गतिः, ह्रदो वह्निमानित्यादौ ह्रदत्वादिप्रकारकबुद्धित्वस्य कस्यापि प्रतिबध्यतानवच्छेदकत्वेन तदभावस्य विषयिताप्रयुक्तत्वाभावेऽपि न क्षतिः, विषयिताप्रयुक्ताधिकरणत्वसम्बन्धावच्छिन्नह्रदत्ववैशिष्ट्यावगाहित्वाभावत्वावच्छिन्नाभावस्य व्यधिकरणसम्बन्धावच्छिन्नाभावतया केवलान्वयित्वेन तत्रोक्तसम्बन्धेन बाधत्वस्य वृत्तेर्लक्षणगमनात् ।

एतेन यद्रूपावच्छिन्नविषयकनिश्चयोत्तरानुमितिसामान्ये पक्षसाध्यवैशिष्ट्यावगाहित्वाभावो विरोधिविषयताप्रयुक्तः तद्रूपावच्छिन्नत्वे सति य-

द्रूपावच्छिन्नविषयिकनिश्चयोत्तरानुमितिसामान्ये पक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावो विरोधिविषयिताप्रयुक्तः तद्रूपावच्छिन्नविषयित्वान्यत्वे सति यद्रूपावच्छिन्नविषयिताशालिनिश्चयोत्तरानुमितिसामान्ये साध्ये साध्यतावच्छेदकवैशिष्ट्यावगाहित्वाभावो विरोधिविषयिताप्रयुक्तः तद्रूपावच्छिन्नविषयत्वान्यत्वे च सति यद्रूपावच्छिन्नविषयताशालिनिश्चयोत्तरानुमितिसामान्ये प्रकृतपक्षे साध्यवैशिष्ट्यावगाहित्वाभावो विरोधिविषयिताप्रयुक्तः तद्रूपावच्छिन्नविषयिताशाल्यनुमितिनिष्ठजन्यतानिरूपितजनकता यद्रूपावच्छिन्नविषयताव्यापिका तद्रूपावच्छिन्नत्वमिति परिष्कारो निरस्तः, ह्रदो वह्निमान् धूमादित्यादौ विरोधिविषयिताप्रयुक्तस्य ह्रदत्ववैशिष्ट्यावगाहित्वाभावस्य यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकत्वं तादृशरूपावच्छिन्नविषयताया अप्रसिद्धेः, उक्तरीत्या ह्रदत्वप्रकारत्वाभावस्य विरोधिविषयताप्रयुक्तत्वाभावादव्याप्तेस्सर्वत्र विरोधिपदवैयर्थ्याच्च । उन्नायकत्वाभावादेव सिद्धिविषयेऽतिव्याप्तिवारणात् । नचैवं वह्निमान् ह्रदो वह्निमान् इत्यत्राव्याप्तिः । उक्तस्थले बाधनिश्चयोत्तरानुमितिसामान्ये विषयताप्रयुक्तस्य पक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावस्य सत्त्वेन बाधत्वस्योक्तसम्बन्धेन पक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावत्ववृत्तित्वाभावादिति वाच्यम्, पक्षसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताभिन्नविषयिताप्रयुक्ताधिकरणतासम्बन्धस्याभावप्रतियोगितावच्छेदकत्वादुक्तस्थले तादृशाधिकरणतासम्बन्धावच्छिन्नपक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावत्वावच्छिन्नाभावस्य व्यधिकरणसम्बन्धावच्छिन्नाभावत्वेन केवलान्वयित्वेन तादृशाभावत्वे उक्तसम्बन्धेन बाधत्वस्य वृत्तित्वानपायात् । काञ्चनमयह्रदो वह्निमानित्यादौ चाश्रयासिद्धत्वस्य ह्रदविशेष्यत्वावच्छिन्नकाञ्चनमयत्वप्रकारित्वाभावत्वे उक्तसम्बन्धेनावृत्तेर्नाश्रयासिद्ध्युन्नायकातिव्याप्तिः ।

यत्तु स्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितित्वसमानाधि
रणपक्षतावच्छेदकनिष्ठप्रकारतानिरूपितपक्षनिष्ठविशेष्यतानिरूपकत्वमेवो
यतावच्छेदकरूपविशेषणमिति; तन्न, काञ्चनमयत्वाभाववत्काञ्चनमयह्रदो
ह्निमानित्यत्र पक्षतावच्छेदकप्रकारतानिरूपितपक्षनिष्ठविशेष्यताया आहा
ज्ञानमात्रनिष्ठाया अनुमितित्वसामानाधिकरण्यासम्भवेनाव्याप्तेः । य
च्चानुमितित्वसमानाधिकरणपक्षतावच्छेदकताश्रयनिष्ठप्रकारतानिरूपितवि
ष्यतासामान्ये स्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितित्वसामान
करण्यनिवेशान्न दोषः, उक्तस्थलेऽनुमितित्वसमानाधिकरणयोः काञ्चन
यत्वतदभावप्रकारतानिरूपितह्रदविशेष्यतयोर्बाधनिश्चयोत्तरानुमितिसामा
नाधिकरण्याल्लक्षणसमन्वयः, तादृशविशेष्यतासामान्यान्तर्गतकाञ्चनम
त्वप्रकारतानिरूपितह्रदविशेष्यत्वस्य काञ्चनमयत्वाभाववद्ध्रदनिश्चयोत्तर
मितित्वसामानाधिकरण्याभावात्तदुन्नायके नातिव्याप्तिः, स्वावच्छिन्नवि
यकनिश्चयाव्यवहितोत्तरानुमितित्वसामानाधिकरण्यं च तादृशविशेष्यत
स्वावच्छेदकपक्षतावच्छेदकपर्याप्तावच्छेदकताकविषयतावत्त्वसम्बन्धेन,
तादृशविशेष्यतासामान्यान्तर्गतायाः ह्रदो वह्निमानिति ज्ञानीयायाः विशे
तायाः निरूपकतासम्बन्धेन बाधनिश्चयोत्तरानुमितित्वासामानाधिकरण्ये
न क्षतिरित्यादिकं विभाव्यते; तदा नोक्तदोष इति धेयम् ।

अथात्रापि लक्षणे वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽ
व्याप्तिः । न चोन्नेयदले यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमि
सामान्ये पक्षे साध्यवैशिष्ट्यावगाहित्वाभाव इत्यत्र उत्तरपदं व्यर्थ
बाधनिश्चयस्य पूर्वं परतो वा पक्षे साध्यवैशिष्ट्याद्यवगाह्यनुमितेरसम्भ
बाधोन्नायके सत्प्रतिपक्षे लक्षणसमन्वयसम्भवात् । अव्यवहितत्वं
स्ववृत्तिकृतिमत्त्वं पूर्वोत्तरक्षणवृत्तिपदार्थसाधारणं, तथा च नोक्तोभयव
दादावतिव्याप्तिसम्भवः, वह्न्यभावव्याप्यवद्ध्रदविषयकनिश्चयाव्यवहि

मितिसामान्ये पक्षे साध्यवैशिष्ट्याद्यवगाहित्वाभावाभावात्। वह्निमान् ह्रद इत्यनुमित्यनन्तरं ह्रदो वह्न्यभावव्याप्यवानिति निश्चयसम्भवात्। अत्र कल्पे सत्यन्तदळन्तु प्रतियोगिवैयधिकरण्यघटितव्यापकताघटितजलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदेऽतिव्याप्तिवारकमिति वाच्यम्। एवमपि वह्न्यभाववान् ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यव्याप्यवह्न्यभावोभयवद्ध्रदेऽतिव्याप्तेः। ह्रदो वह्निमानित्यादावपि प्रतियोगिवैयधिकरण्यघटितव्यापकताघटितवह्न्यभावव्याप्यवह्न्यभाववद्ध्रदे चातिव्याप्तेर्दुर्वारत्वात्। उत्तरपदानुपादानेऽप्रामाण्यज्ञानास्कन्दितानुमित्यनन्तरं बाधनिश्चयस्य तदनास्कन्दितानुमित्युत्तरमपि लौकिकसन्निकर्षजन्यबाधनिश्चयस्य सम्भवेनासम्भवस्यैव प्रसङ्गेन उत्तरत्वनिवेशनमसार्थक्यात्। उक्तोभयवद्ध्रदादावतिव्याप्तिर्दुर्वारैवेति चेत्? अत्र वदन्ति, सत्यन्तघटिकाधिकरणतायां विशिष्टान्तरविषयित्वाप्रयोज्यत्वस्य मेयत्वविशिष्टसत्प्रतिपक्षातिव्याप्तिवारणायावश्यं विवक्षणीयतया तत एवोक्तोभयवद्ध्रदवारणसम्भवः।

यत्तु विशिष्टान्तरविषयत्वाप्रयोज्यस्वविषयताप्रयोज्यपक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताकत्वस्य मेयत्वविशिष्टसत्प्रतिपक्षातिव्याप्तिवारणाय स्वातन्त्र्येण निवेशान्नोक्तोभयवद्ध्रदेऽतिव्याप्तिः; न चैवं सत्यन्तदळवैयर्थ्यम्, वह्न्यभावव्याप्यव्याप्यवान् वह्न्यभाववान् वह्न्यभावव्याप्यव्याप्यवांश्च ह्रद इति ज्ञानयोरेकविशिष्टापरत्वेन प्रतिबन्धकतया वह्न्यभावव्याप्यव्याप्यवद्ध्रदविषयतायाः पक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणताप्रयोजकतया तत्रातिव्याप्तिवारकतया तत्सार्थक्यात्; न च तद्विषयताप्रयोज्यायां उक्ताधिकरणतायां विशिष्टान्तरविषयताप्रयोज्यत्वसम्भवः, वक्ष्यमाणरीत्या विशिष्टान्तरे तादृशत्वनिवेशस्यावश्यकत्वादिति, तन्न, उक्तरीत्या सत्यन्तघटकाधिकरणतायां विशिष्टान्तरविषयित्वाप्रयोज्यत्वनिवेशेनैव निर्वाहे स्वातन्त्र्येण विशिष्टान्तराघटितत्वनिवेशस्य

गौरवग्रस्तत्वेन भवदुक्तवैयर्थ्यशङ्काया अनवतारात् । किञ्च स्वातन्त्र्येण तन्निवेशे मेयत्वविशिष्टसत्प्रतिपक्षेऽतिव्याप्तिश्च वह्निधूमोभयसाध्यके मेयत्व-विशिष्टजलव्यापकवह्न्यभावसमानाधिकरणजलवान् धूमाभाववान् मेयत्व-विशिष्टजलव्यापकवह्न्यभावसमानाधिकरणजलवान् ह्रद इति ज्ञानद्वयोत्तर-ह्रदधर्मिकधूमवैशिष्ट्यावगाहित्वाभावाधिकरणतामादाय विशिष्टान्तराघटि-तत्वसम्भवात् । एवमुक्तस्थले जलव्यापकवह्न्यभावसमानाधिकरणजल-व्यापकधूमाभावसमानाधिकरणजलवद्ध्रदरूपसत्प्रतिपक्षैकदेशे धूमाभावस-मानाधिकरणजलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदेऽतिव्याप्तिः, पक्षे धूमवैशिष्ट्यावगाहित्वाभावाधिकरणतामादाय विशिष्टान्तराघटितत्वसम्भ-वात् । न च सत्यन्तघटकाधिकरणतायां विशिष्टान्तरविषयित्वाप्रयोज्यत्व-मात्रनिवेशेऽसम्भवः, स्वविषयताप्रयोज्याधिकरणताया जलवद्ध्रदविषयत्वा-प्रयोज्यत्वाभावात्, विशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वनि-वेशेऽपि सत्प्रतिपक्षविषयतानिष्ठप्रयोजकतावच्छेदकस्य जलव्यापकवह्न्यभा-वत्वावच्छिन्नविषयिताशालिनिश्चयविशिष्टनिश्चयीयजलवद्ध्रदत्वावच्छिन्नवि-षयतात्वस्य जलवद्ध्रदत्वावच्छिन्नविषयितात्वव्यापकत्वमव्याहतम् । जल-व्यापकवह्न्यभावनिश्चयविशिष्टनिश्चयीयविषयत्वतदविशिष्टनिश्चयीयविषय-तयोरभेदादिति वाच्यम्,—विशिष्टान्तरविषयत्वावच्छिन्नव्यापकतानवच्छे-दकत्वस्य सत्यन्तघटकविषयतानिष्ठप्रयोजकतायां निवेशेन दोषाभावात् । जलवद्ध्रदविषयतायाः जलवान् ह्रद इति ज्ञानसाधारणतया तत्र सत्प्रति-पक्षीयप्रयोजकत्वावच्छिन्नाभावसत्वेन विशिष्टान्तरविषयतात्वावच्छिन्नव्या-पकतानवच्छेदकत्वस्य विषयितानिष्ठप्रयोजकतायामक्षतत्वात्, इत्थञ्च स-त्प्रतिपक्षान्तरादिज्ञानकालीनज्ञानस्यैव विषयो यस्सत्प्रतिपक्षः तत्रापि न क्षतिः, तादृशस्थले स्वविषयताप्रयोज्याधिकरणताया विशिष्टान्तरविषयता-प्रयोज्यत्वानियमेऽपि स्वविषयतानिष्ठप्रयोजकतायां विशिष्टान्तरविषयिताव्या-

पकतानवच्छेदकत्वाक्षतेः। एवञ्च ह्रदस्समानाधिकरणजलाभाववानित्यादौ बाधघटितसत्प्रतिपक्षेऽपि नाव्याप्तिः, सत्प्रतिपक्षविषयितानिष्ठप्रयोज्यत्वस्य तादृशबाधविषयितात्वावच्छिन्नव्यापकतानवच्छेदकत्वात्। केवलबाधविषयज्ञाने सत्प्रतिपक्षज्ञानीयप्रयोजकत्वावच्छिन्नाभावसत्वात्। विशिष्टान्तर–विषयितायां च स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वं निवेश्यम्, तेन सत्प्रतिपक्षविषयितानिष्ठप्रयोज्यताया जलव्यापकवह्न्यभावकालीनजलवद्ध्रदरूपविशिष्टान्तरविषयिताव्यापकतावच्छेदकत्वेऽपि न क्षतिः। न चावच्छेदकावच्छेदेन वह्न्यादिसाध्यके अवच्छेदकावच्छेदेन सत्प्रतिपक्षेऽव्याप्तिः। तत्र ह्रदत्वावच्छिन्नविशेष्यतानिरूपितह्रदत्वव्यापकत्वविशिष्टसंयोगादिसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारत्वाभावाधिकरणताया एव सत्यन्तप्रविष्टतया तत्प्रयोजकतायाश्चासामानाधिकरण्येन सत्प्रतिपक्षविषयतासाधारण्ये विशिष्टान्तरीभूतसामानाधिकरण्येन सत्प्रतिपक्षविषयत्वावच्छिन्नव्यापकतावच्छेदकत्वादिति वाच्यम्, यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये पक्षसाध्यवैशिष्ट्यावगाहित्वाभावव्याप्याभावाधिकरणताविशिष्टान्तरविषयितात्वावच्छिन्नव्यापकतानवच्छेदकविषयितानिष्ठप्रयोजकतानिरूपितप्रयोज्यतावती तद्रूपावच्छिन्नत्वस्य सत्यन्तार्थत्वेन दोषाभावात्। उक्तस्थले ह्रदत्वव्यापकत्वविशिष्टसंयोगावच्छिन्नवह्निप्रकारत्वाभावव्याप्यो यस्संयोगेन ह्रदे वह्निवैशिष्ट्यावगाहित्वाभावः। तदधिकरणताप्रयोजकतायास्सामानाधिकरण्येन सत्प्रतिपक्षविषयितासाधारण्ये विरहेण तादृशसत्प्रतिपक्षरूपविशिष्टान्तरविषयितात्वावच्छिन्नव्यापकतानवच्छेदकत्वानपायेन तादृशप्रयोजकतामादायैव अवच्छेदकावच्छेदेन साध्यता–स्थले अवच्छेदकावच्छेदेन सत्प्रतिपक्षे लक्षणसमन्वयात्।

यत्तु जलवद्ध्रदविषयतामादायासम्भववारणाय यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये पक्षधर्मिकसाध्यवैशिष्ट्यावगा–

हित्वाभावो विरोधिविषयिताप्रयुक्तः । तादृशत्वं विशिष्टान्तरे निवेशनीयमिति । तन्न, एवमपि बाधघटितसत्प्रतिपक्षाव्याप्तेः । विशिष्टान्तरे विरोध्युन्नायकत्वस्यापि निवेशेन तत्र दोषवारणेऽपि वह्निधूमोभयसाध्यके जलव्यापकवह्न्यभावसमानाधिकरणजलव्यापकधूमाभावसमानाधिकरणतादृशजलवद्ध्रदरूपसत्प्रतिपक्षघटितसत्प्रतिपक्षेऽव्याप्तेः । उक्तोभयवद्ध्रदादावतिव्याप्तिश्च, तद्घटकयोः वह्न्यभाववद्ध्रदवह्न्यभावव्याप्यव्याप्यवद्ध्रदयोः प्रत्येकं तादृशत्वाभावात् ।

यदपि बाधघटितसत्प्रतिपक्षाव्याप्तिवारणाय विशिष्टान्तरविषयितानिष्ठप्रयोजकतायां स्वानवच्छेदकधर्मावच्छिन्नत्वस्वप्रयोज्याधिकरणतावृत्तिभेदप्रतियोगितानवच्छेदकत्वोभयसम्बन्धेन प्रयोजकताविशिष्टान्यत्वं देयम्। भेदप्रतियोगितावच्छेदकता च स्वानिरूपितप्रयोज्यत्ववत्त्वसम्बन्धावच्छिन्ना। तथा च बाधघटितसत्प्रतिपक्षस्थले बाधविषयितानिष्ठप्रयोजकतायाः उक्तोभयसम्बन्धेन सत्प्रतिपक्षप्रयोजकताविशिष्टत्वात्तदन्यविशिष्टान्तरविषयितानिष्ठप्रयोजकता विपरीतसत्प्रतिपक्षादिप्रयोजकतैव, तन्निरूपितप्रयोज्यत्वाभावस्य स्वविषयिताप्रयोज्याधिकरणतायां सत्त्वान्न तत्राव्याप्तिः । नचोक्तविशेषणदाने ह्रदो वह्निधूमोभयवानित्यत्र जलव्यापकवह्न्यभावसमानाधिकरणजलव्यापकधूमाभावसमानाधिकरणतादृशजलवद्ध्रदात्मकसत्प्रतिपक्षघटकसत्प्रतिपक्षे मेयत्वविशिष्टेऽतिव्याप्तिः, विशिष्टान्तरभूतावान्तरसत्प्रतिपक्षविषयितानिष्ठप्रयोजकतायाः उक्तोभयसम्बन्धेन महासत्प्रतिपक्षविषयितानिष्ठप्रयोजकताविशिष्टत्वादिति वाच्यम्, स्वावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकताविशिष्टान्यत्वस्यैव विशिष्टान्तरविषयितानिष्ठप्रयोजकतायां निवेश्यत्वात्, महासत्प्रतिपक्षविषयितानिष्ठप्रयोजकतायाः मेयत्वविशिष्टावान्तरसत्प्रतिपक्षविषयितात्वव्यापकरूपावच्छिन्नतया निरुक्तप्रयोज-

कताविशिष्टान्यत्वस्याक्षतत्वेन मेयत्वविशिष्टे तत्रातिव्याप्तिविरहात् । न च ह्रदो वह्निमानित्यत्र ह्रदवृत्तिवह्निव्यापकीभूताभावप्रतियोगिजले मेयत्वविशिष्टेऽतिव्याप्तिः, तत्र वह्निव्यापकीभूताभावप्रतियोगि जलं ह्रदवृत्तिजलमिति ज्ञानयोः परस्परविशिष्टत्वेन प्रतिबन्धकताद्वयस्य स्वीकरणीयतया तथैव विनिगमनाविरहेण प्रयोजकताद्वयस्यापि परस्परावच्छेदकानवच्छिन्नस्य स्वीकरणीयतया द्वयोरपि प्रयोजकतयोः निरुक्तोभयसम्बन्धेन परस्परविशिष्टतया प्रयोजकताविशिष्टप्रयोजकतानिरूपितप्रयोज्यताशून्यत्वस्य स्वविषयताप्रयोज्यपक्षसाध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायामक्षतत्वात् । स्वविषयितानिष्ठप्रयोजकतायामपि निरुक्तोभयसम्बन्धेन प्रयोजकताविशिष्टान्यत्वनिवेशे तत्रैव लक्ष्यभूते ह्रदवृत्तिवह्निव्यापकीभूताभावप्रतियोगिजलेऽतिव्याप्तिरिति वाच्यम्, स्वप्रयोज्यत्वाभावसमानाधिकरणप्रयोज्यतानिरूपितत्वस्यापि निरुक्तप्रयोजकाविशिष्टघटकतया उक्तस्थले च उक्तप्रयोजकताद्वयस्यापि परस्परनिरूपितप्रयोज्यत्वाभावसमानाधिकरणप्रयोज्यत्वानिरूपितत्वेन निरुक्तप्रयोजकताविशिष्टान्यत्वस्याक्षततया उक्तातिव्याप्त्यनवकाशादिति । तन्न, बाधविषयतानिष्ठाया बाधीयप्रयोजकताया उक्तोभयसम्बन्धेन सत्प्रतिपक्षप्रयोजकताविशिष्टत्वेन वारणेऽपि तादृशबाधविषयतानिष्ठायास्सत्प्रतिपक्षप्रयोजकताया अवारणेन बाधरूपविशिष्टान्तरविषयतानिष्ठसत्प्रतिपक्षप्रयोजकतानिरूपितप्रयोज्यत्वाभावस्य सत्प्रतिपक्षविषयिताप्रयोज्याधिकरणतायामभावेन बाधघटितसत्प्रतिपक्षाव्याप्तेरवारणात्, स्वविषयता-निष्ठप्रयोजकतानिरूपितप्रयोज्यतावत्यां जलव्यापकं समानाधिकरणजलं जलवान् ह्रद इति ज्ञानद्वयानन्तरकालीनानुमितिनिष्ठाधिकरणतायां स्वनिरूपितप्रयोज्यतासम्बन्धेन बाधविषयतानिष्ठप्रयोजकताया अभावेन स्वप्रयोज्याधिकरणतानिष्ठभेदप्रतियोगितानवच्छेदकघटितोभयसम्बन्धेन प्रयोजकताविशिष्टान्यत्वस्याक्षततया उक्तविशेषणेन बाधप्रयोजकत्ववारणाच्च । सत्प्र-

तिपक्षविषयतानिष्ठप्रयोजकतायास्स्वप्रयोज्याधिकरणतावृत्तिभेदप्रतियोगितानवच्छेदकत्वसम्बन्धेन स्वात्मकप्रयोजकताविशिष्टत्वेन तदन्यप्रयोजकतानिरूपितप्रयोज्यत्वाभावस्य मेयत्वविशिष्टसत्प्रतिपक्षविषयताप्रयोज्याधिकरणतायां सत्त्वेन तत्रातिव्याप्तिवारणायोपात्तस्य स्वानवच्छेदकधर्मावच्छिन्नत्वस्य व्यर्थत्वाच्च । स्वनिरूपितप्रयोज्यत्वाभावसमानाधिकरणप्रयोज्यतानिरूपितत्वस्य स्वात्मकप्रयोजकतायामभावेनैवोक्तसम्बन्धेन प्रयोजकताविशिष्टान्यत्वस्य सत्प्रतिपक्षप्रयोजकतायां सत्त्वेनोक्तातिव्याप्त्यप्रसक्तेः। उक्तोभयसम्बन्धेन प्रयोजकताविशिष्टान्यत्वस्य प्रयोजकतायां निवेशे मेयत्वविशिष्टावान्तरसत्प्रतिपक्षेऽतिव्याप्तिशङ्कापि नोचिता। प्रतिहेतुतावच्छेदकघटितसाध्याभावाभाववदवृत्तिमत्पक्षे वह्न्यभाववद्वह्न्यभावव्याप्यव्याप्यवद्वृत्तिवह्न्यभावव्याप्यव्याप्यवद्ध्रदे चातिव्याप्तिवारणाय विशिष्टान्तरविषयितात्वव्यापकजनकताकत्वस्य विवक्षणीयतया तदभावादेव मेयत्वविशिष्टावान्तरसत्प्रतिपक्षवारणात्तदर्थं स्वविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकताविशिष्टान्यत्वपर्यन्तस्यानावश्यकत्वात् । यद्यपि वह्न्यभावव्याप्यव्याप्यत्वविशिष्टेऽवान्तरसत्प्रतिपक्षे उक्तरीत्यातिव्याप्तिवारणाय तावत्पर्यन्तनिवेशस्यावश्यकता, तथापि तादृशविशेषणोपादानेऽपि तत्रातिव्याप्तिवारणासम्भवः, महासत्प्रतिपक्षविषयतानिष्ठप्रयोजकताया अपि मेयत्वविशिष्टावान्तरसत्प्रतिपक्षविषयतात्वव्यापकरूपावच्छिन्नत्वात्, जलव्यापकवह्न्यभावसमानाधिकरणजलव्यापको धूमाभाव इति निश्चयविशिष्टमेयत्वविशिष्टजलव्यापकवह्न्यभावसमानाधिकरणजलवान् ह्रद इति ज्ञानीयतादृशह्रदविषयितात्वस्य मेयत्वविशिष्टजलव्यापकवह्न्यभावसमानाधिकरणजलवद्ध्रदविषयतानिष्ठभेदप्रतियोगितावच्छेदकत्वान्निश्चयविशिष्टनिश्चयीयविषयत्वतदविशिष्टनिश्चयीयविषयित्वयोर्भेदविरहात् । अन्यथा विशिष्टान्तरविषयतात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वाभावनिवेशेनैव जलवद्ध्रदविषयितामादायास-

न्मवव्वारणसम्भवे भवतां विशिष्टान्तरे तादृशत्वनिवेशनवैफल्यापत्तेः ।
स्वावच्छिन्नविषयितात्वव्यापकतावच्छेदकप्रयोजकताविशिष्टान्यत्वस्य प्रयोजकतायां निवेशे तु मेयत्वविशिष्टावान्तरसत्प्रतिपक्षवारणं सम्भवतीति बोध्यम् ।

मेयत्वविशिष्टे ह्रदवृत्तिवह्निव्यापकीभूताभावप्रतियोगिजलेऽतिव्याप्तिवारणाय स्वनिरूपितप्रयोज्यत्वाभावसमानाधिकरणप्रयोज्यतानिरूपितत्वस्यापि निरुक्तप्रयोजकतावैशिष्ट्यघटकत्वमावश्यकमित्यपि न युक्तम् । विशिष्टान्तरविषयित्वाव्यापकजनकत्वाभावादेव तत्रातिव्याप्तिविरहात् । नचैवमपि वह्न्यभावव्याप्यव्यापकत्वविशिष्टेह्रदवृत्तिवह्न्यभावाभावव्यापकीभूताभावप्रतियोगिजलेऽतिव्याप्तिवारणाय तादृशसम्बन्धस्यापि निरुक्तप्रयोजकतावैशिष्ट्यघटकत्वमावश्यकम् । तत्र विशिष्टान्तरविषयित्वाव्यापकजनकताकत्वस्यापि सत्त्वादिति वाच्यम्,—एवमपि वह्न्यभावव्याप्यव्याप्यविशिष्टं यज्जलव्यापकवह्न्यभावसमानाधिकरणजलं तद्विशिष्टह्रदेऽतिव्याप्तिसम्भवेन तावत्पर्यन्तानुधावनवैफल्यात् । तत्रापि जलव्यापकत्वप्रकारतानिरूपितवह्न्यभावत्वावच्छिन्नविशेष्यताशालिनिश्चयविशिष्टनिश्चयीयजलवद्ध्रदविषयतात्वेन वह्न्यभावत्वावच्छिन्नविशेष्यतानिरूपितजलव्यापकत्वप्रकारताशालिनिश्चयविशिष्टनिश्चयीयजलवद्ध्रदविषयतात्वेन च विनिगमनाविरहेण प्रयोजकताद्वयस्य सत्त्वात् । यद्यप्युक्तरीत्या बाधघटितसत्प्रतिपक्षाव्याप्तिवारणाय विशिष्टान्तरविषयतानिष्ठप्रयोजकतायां स्वविषयतानिष्ठप्रयोजकताविशिष्टान्यत्वनिवेशे वह्न्यभावव्याप्यव्याप्यजलव्यापकवह्न्यभावकालीनजलाभाववह्न्युभयवानित्यत्र तादृशजलवद्ध्रदरूपबाधेऽतिव्याप्तिः, विशिष्टान्तरीभूतजलव्यापकवह्न्यभावकालीनजलवद्ध्रदविषयतानिष्ठप्रयोजकतायाः निरुक्तोभयसम्बन्धेन बाधविषयतानिष्ठप्रयोजकताविशिष्टत्वात् तदन्यविशिष्टान्तरविषयतानिष्ठप्रयोजकतानिरूपितप्रयोज्यताशून्यस्वविषयताप्रयोज्या-

धिकरणताकत्वादित्याशङ्क्य निरुक्तविशेषणादानेऽपि वह्न्यभावव्याप्यव्याप्याभाववह्न्युभयवानित्यत्र वह्न्यभावव्याप्यव्याप्यवद्ध्रदेऽतिव्याप्तेर्दुर्वारतया यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये विरोधिविषयताप्रयोज्यतावच्छेदकयद्रूपविशिष्टपक्षधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावः तद्रूपावच्छिन्नत्वे सति यद्रूपावच्छिन्नविषयताशालिनिश्चयाव्यवहितोत्तरानुमितिसामान्ये विरोधिविषयताप्रयोज्यतावच्छेदकतद्रूपविशिष्टधर्मिकसाध्यवैशिष्ट्यावगाहित्वाभावः तद्रूपावच्छिन्नविषयत्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदका यद्रूपावच्छिन्नविषयता तद्रूपावच्छिन्नत्वस्य विवक्षणीयतया पूर्वोक्तबाधेऽव्याप्त्यनवकाशादिति समाहितम्। तन्न, वह्न्यभावव्याप्यव्याप्याभाववह्न्युभयसाध्यकस्थले तादृशबाधविषयिताप्रयोज्यतावच्छेदकस्य ह्रदधर्मिकवह्न्यभावव्याप्यव्याप्याभाववैशिष्ट्यावगाहित्वाभावत्वस्य वह्न्यभावव्याप्यवद्ध्रदरूपसत्प्रतिपक्षविषयताप्रयोज्यतावच्छेदकत्वाभावेऽपि तादृशबाधविषयिताप्रयोज्यतावच्छेदकस्य ह्रदधर्मिकोभयवैशिष्ट्यावगाहित्वाभावस्य तादृशसत्प्रतिपक्षविषयताप्रयोज्यतावच्छेदकत्वेन तादृशबाधात्मकसत्प्रतिपक्षोन्नायकेऽतिव्याप्तेरवारणात् । व्यापकाभावप्रयोजकस्येति न्यायेन प्रत्येकवैशिष्ट्यावगाहित्वाभावप्रयोजकस्याप्युभयवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वानपायात् । अन्यथा सत्यन्ताभावादेव पक्षसाध्यप्रसिद्ध्युन्नायकयोर्वारणे विरोध्यन्तद्वयवैयर्थ्यप्रसङ्गात् । वस्तुतस्तु उक्तोभयसाध्यकस्थले वह्न्यभावव्याप्यव्याप्यवद्ध्रदरूपबाधेऽतिव्याप्तिवारणाय पक्षसाध्यवैशिष्ट्यावगाहित्वाभावव्याप्याभावनिरूपितयादृशयादृशाधिकरणता सत्यन्तघटिका तादृशतादृशाधिकरणतासामान्यप्रयोजकविषयतानिरूपितावच्छेदकत्वमुन्नेयतावच्छेदकरूपविशेषणम्; तथा चोक्तस्थले वह्न्यभावव्याप्यव्याप्यवद्ध्रदरूपबाधे नातिव्याप्तिः, तत्र सत्प्रतिपक्षस्य तादृशबाधोन्नेयरूपस्य

तादृशबाधप्रयोजकविषयताप्रयोज्यह्रदधर्मिकोभयवैशिष्ट्यावगाहित्वाभाव-
प्रयोजकविषयताकत्वेऽपि तादृशाधिकरणतासामान्यान्तर्गतह्रदधर्मिकवह्न्य-
भाववद्व्याप्यव्याप्याभाववैशिष्ट्यावगाहित्वाभावाधिकरणताप्रयोजकविषयता-
कत्वाभावात् । ह्रदो वह्निमान् धूमादित्यादौ च सत्प्रतिपक्षविषयताप्रयो-
ज्याधिकरणता सामान्यस्य बाधविषयताप्रयोज्यत्वादुन्नायके स—
त्प्रतिपक्षे लक्षणसमन्वयः । तथा च स्वविशिष्टरूपाव—
च्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका यद्रूपावच्छिन्नाविषय-
ता तद्रूपावच्छिन्नत्वमिति लक्षणघटकदलद्वयपर्यवसितार्थः । रूपे स्ववैशि-
ष्ट्यञ्च स्वसमानाधिकरणेत्यादिव्यापकत्वसम्बन्धेन, स्वाधिकरणता स्वनि-
ष्ठावच्छेदकताकप्रतियोगिताकभेदविशिष्टपक्षसाध्यवैशिष्ट्यावगाहित्वाभाव-
व्यापकाभावाधिकरणतात्वसम्बन्धावच्छिन्ना, तत्र स्वनिष्ठावच्छेदकता—स्व-
समानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्ना । स्वाधिकरणता
स्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरत्वसम्बन्धेन । भेदप्रतियोगिताव-
च्छेदकता विषयिताप्रयुक्तत्वविशिष्टस्वरूपसम्बन्धावच्छिन्ना । प्राथमिकभेद-
प्रतियोगितावच्छेदकता स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्ब-
न्धेन । स्वनिष्ठावच्छेदकता स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्व-
सम्बन्धावच्छिन्ना । स्वाधिकरणता स्वावच्छिन्नविषयकनिश्चयाव्यवहितोत्त-
रानुमितित्वसम्बन्धावच्छिन्ना । भेदप्रतियोगितावच्छेदकता विषयताप्रयुक्त-
त्वविशिष्टस्वरूपसम्बन्धावच्छिन्नेति ।



च रीत्या भगवत्या नामान्यनन्तान्येव । वक्ष्यति च हयास्यः 'देवीनामसहस्राणि कोटिशः सन्ति कुम्भजे'ति । **सौरसंहितायां** याज्ञवल्क्यं प्रति मायां प्रकृत्य **सूर्यवचनम्**

'अस्या नामान्यनन्तानि तानि वर्णयितुं मया ।
न शक्यानि मुनिश्रेष्ठ कल्पकोटिशतैरपि' ।।

इति । **देवीभागवतेऽपि**

'असंख्यातानि नामानि तस्या ब्रह्मादिभिः सुरैः ।
गुणकर्मविधानाद्यैः कल्पितानि च किं ब्रुवे' ।।

इति । किं बहुना शब्दमात्रं ब्रह्मपरम् । अत एव प्रकृतेऽपि कानिचिन्नामानि जीवावस्थाभेदपराणि दृश्यन्ते विश्वरूपा तैजसात्मिकेत्यादीनि । कानिचित्तु जीवविशेषणपराणि मालिन्यादीनि । स्थावरविशेषणपराणि मह्यादीनि । सगुणब्रह्मविशेषणपराणि मुकुन्देत्यादीनि । तत्तच्छक्तिपराणि रमेत्यादीनि । तत्तदवतारविशेषकृतगुणक्रियादिघटितानि भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिणीत्यादीनि । निर्गुणब्रह्मपराणि परंज्योतिरित्यादीनि दृश्यन्ते। एवमन्येऽपि बहवो भेदा ऊह्याः । एवं सति यद्यपि शब्दजातं सर्वमपि देवीनामैवेति सहस्रनामगणनप्रयासो व्यर्थ एव, तथापि तेषु यैर्यैर्नामभिस्तावत्पुरातना महामहिमानो देवीभक्ता देवीं स्तुत्वा प्रसादितवन्तः स्वान्मनोरथान् साधितवन्तो देवीमुखान्नाम्नोऽस्य माहात्म्यं भवत्विति वरान्दापितवन्तः स्वयमेव वा वरान् दत्तवन्तस्तान्येव नामानि संग्रहीतुं गणनाप्रयासः सार्थकः । सचान्येष्वपि सहस्रनामसु तुल्य एव । अस्य तु तेभ्योऽपि महत्त्वमधिकजनपरिग्रहदार्ढ्याच्छीघ्रफलकत्वेतरासाध्यफलकत्वादिभिर्बहुभिर्हेतुभिरिति तु पूर्वमेव व्यक्तीकृतमुत्तरत्रापि करिष्यते । तदेतत्सर्वमभिप्रेत्योक्तं **विष्णुधर्मोत्तरे**—

'एकस्यैव समस्तस्य ब्रह्मणो द्विजसत्तम ।।
नाम्नां बहुत्वं लोकानामुपकारकरं शृणु ।
निमित्तशक्तयो नाम्नां भेदिन्यस्तदुदीरणात् ।
विभिन्नान्येव साध्यन्ते फलानि द्विजसत्तम ।
यच्छक्तिमन्नाम यस्य तत्तस्मिन्नेव वस्तुनि ।
साधकं पुरुषव्याघ्र सौम्यक्रूरेषु वस्तुषु'

इति । तेनेदमपि सिध्यति । अन्नकामोऽन्नदायै नम इति, वसुकामो वसुदायै नम इति, भीतो भयापहायै नम इति, बद्धो बन्धमोचिन्यै नम इति जपेदित्यादि । यद्यपि **वायुपुराणे**—

'अरण्ये प्रान्तरे वापि जले वापि स्थलेऽपि वा ।
व्याघ्रकुम्भीरचोरेभ्यो भयस्थाने विशेषतः[1] ।

---

1. आधिष्वपि च सर्वेषु देव्या नामानि कीर्तयेदिति वचनेन देवीनामसामान्यस्य यस्य कस्यापि कीर्तनेन भयनिवृत्तिनिरुक्ता इति अधिकपाठः ।

स्वपंस्तिष्ठन्व्रजन्मार्गे प्रजपन्भोजने रतः ।
कीर्तयेत्सततं देवीं स वै मुच्येत बन्धनात् ' ।।

इति देवीनामकीर्तनसामान्यस्यैव बन्धनिवर्तकत्वमुक्तम् । वामकेश्वरतन्त्रेऽपि

मनसा संस्मरत्यस्या यदि नामापि साधकः ।
तदैव मातृचक्रस्य विदितो भवति प्रिये ।।

इति नामस्मरणसामान्यस्य मातृचक्रान्तं प्रसिद्धिः फलमुक्तम् । तथापि चतुर्धाकरण-न्यायेन विष्णुधर्मोत्तरवचनेनैतेषामुपसंहारादत्रत्यो नामशब्दो भयापहेत्यादिनामवि-शेषपरत्वेन व्यवतिष्ठते । अत एव नामविशेषाश्रयेण फलविशेषः काशीखण्डे स्मर्यते

उमानामामृतं पीतं येनेह जगतीतले ।
न जातु जननीस्तन्यं स पिबेत्कुम्भसंभव ।।

उमेति द्व्यक्षरं मन्त्रं योऽहर्निशमनुस्मरेत् ।
न स्मरेच्चित्रगुप्तस्तं कृतपापमपि द्विज ।।

इत्यादि । नन्वेवंसति फलश्रुतौ सर्वफलकत्वोक्तेरप्यनेनैव न्यायेनोपसंहारः प्रसज्जते । ततश्च सर्वरोगप्रशमनीमित्यादिना वक्ष्यमाणस्य सर्वफलप्रदत्ववचनस्य नातीव सार्थ-क्यम् । न चार्थवादत्वेन सार्थक्यम् । वेदे तथा सुवचत्वेपि पुराणेष्वसंभवात् । तदुक्तं बृहन्नारदीये—

पुराणेष्वर्थवादत्वं ये वदन्ति द्विजाधमाः ।
तैर्रजितानि पुण्यानि तद्वदेव भवन्ति वै ।।

समस्तकर्मनैर्मूल्यसाधनानि नराधमः ।
पुराणान्यर्थवादानि ब्रुवन्नरकमश्नुते ।।

इत्यादीति चेत् । मैवम् । तत्तन्नाम्नां शक्तिभेदेन फलभेदे सिद्धे तत्समष्टयनुवाद-कत्वेन तत्सार्थक्यसंभवात् । नचानुवादस्याप्यर्थानुवादान्तःपातित्वेनोक्तनिषेधवाक्य-विरोधः । तत्रत्यार्थवादपदस्यात्मवपोत्खेदनादिवाक्यसमानयोगक्षेमगुणवादपरत्वात् । ' प्रतिमासु शिलाबुद्धिं कुर्वाणो नरकं व्रजे ' दित्यादौ शिलात्वे सत्येव शिलाबुद्धिनिषे-धस्य शिलान्तरसाधारणदेवतानाविर्भावबुद्धिनिषेधपरत्ववत् । वस्तुतस्तु ' सर्वेभ्यः कामेभ्यो दर्शपूर्णमासा ' विति वाक्यस्य ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते ' त्यनेन फलांशे नोपसंहारः । ' न हिंस्यात्सर्वा भूतानी ' ति निषेधस्य ' न ब्राह्मणं हन्या ' दित्य-नेनापि नोपसंहार इति सिद्धान्तः । विशेषाकाङ्क्षायां सत्यामेवोपसंहारावतारात् । अनयोर्विधिनिषेधयोः सर्वपदघटितत्वेन विशिष्य विशिष्यैव सर्वेषां फलानां प्राणिनां चोपस्थितया भावनान्वये कीदृशं फलं किं जातीयः प्राणीति विशेषाकाङ्क्षाया अनुद-यात् । तदुक्त तन्त्रवार्तिके —

सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ।
स्पष्टस्य तु विधेर्नान्यैरुपसंहारसंभवः ।।

इति । तथाच प्रकृतेऽपि सर्वेभ्यः कामेभ्य एकैकं नामेति विधिपर्यवसानस्याव
'यच्छक्तिनमन्नाम यस्ये'ति विष्णुधर्मोत्तरवचनस्य पाद्मवायवीयदेवीनामसामा
विध्युपसंहारकताया नामांशे स्वीकारेऽपि फलांशे तदस्वीकारः । सर्वपद्मघ
विधिपर्यवसानस्य बहुभिर्वचनैः सिद्धत्वात् । तथाच देवीवचनम्

कीर्तयेन्नाममाहात्म्यमिदं मत्प्रीतये सदा ।
मत्प्रीत्या सकलान्कामांल्लभते नात्र संशयः ॥

इति । कालिकापुराणेऽपि—

ये स्तुवन्ति जगन्मातर्भवतीमम्बिकेति च ।
जगन्मयीति मायेति सर्वं तेषां प्रसिद्ध्यति ॥

इति । विष्णुपुराणे देवींप्रति विष्णुवचनम्

ये त्वां मायेति दुर्गेति वेदगर्भाम्बिकेति च ।
भद्रेति भद्रकालीति क्षेम्या क्षेमंकरीति च ॥

प्रातश्चैवापराह्णे च स्तोष्यन्त्यानम्रमूर्तयः ।
तेषां हि प्रार्थितं सर्वं मत्प्रसादाद्भविष्यति ॥

इति । याज्ञवल्क्यस्मृतौ—

विनायकस्य जननीमुपतिष्ठेत्ततोऽम्बिकाम् ।
दूर्वा[1]सर्षपपुष्पाणां दत्त्वार्घ्यं विनिवेदयेत् ॥

इति । विद्यायोपस्थानमन्त्रं लिङ्गं च स्मर्यते

रूपं देहि यशो देहि भगं भगवति देहि मे ।
पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि[2] मे ॥

इति । देवीभागवतेऽपि

न तदस्ति पृथिव्यां वा दिवि[3] प्राप्यं सुदुर्लभम् ।
प्रसन्नायां शिवायां यदप्राप्यं नृपसत्तम ॥

न मन्दास्तेऽतिदुर्भाग्या रोगैस्ते समुपद्रुताः ।
येषां चित्ते न विश्वासो भवेदम्बार्चनादिषु ॥

इति । हरिवंशेऽपि

ब्रह्मा विष्णुश्च रुद्रश्च चन्द्रसूर्याग्निमारुताः ।
अश्विनौ वसवश्चैव विश्वे साध्यास्तथैव च ॥

---

1. एवं. 2. देहिषु, 3. जीवि.

महेन्द्रः सहपर्जन्यो धाता भूमिर्दिशो दश ।
गावो नक्षत्रवंशाश्च ग्रहा नद्यो ह्रदास्तथा ।।

सरितः सागराश्चैव नानाविद्याधरोरगाः ।
तथा नागाः सुवर्णाश्च गन्धर्वाप्सरसां गणाः ।।

कृत्स्नं जगदिदं प्रीतं देवीनामानुकीर्तनात् ।

इति । नचैवं पर्यवसन्नस्य विधेरन्नदा—वसुदादिनामभेदेन बहुरूपत्वात्सर्वेभ्यः कामेभ्योऽन्नदेति नाम कीर्तयेदिति विधिनैव सिद्धे विष्णुधर्मोत्तरीयस्य 'अन्नकामोऽन्नदेति नाम कीर्तये' दिति विशेषविधेर्वैयर्थ्यापत्तिरिति वाच्यम् । अस्य पर्यनुयोगस्य स्वर्गकामविधावपि तुल्यत्वात् । अनेन विधिनैव स्वर्गफलकत्वं ज्ञात्वानुष्ठानं स्वर्गो नान्यथेत्यभ्युदयशिरस्कत्वादिरूपसमाधानस्यापि तुल्यत्वात् । परमार्थतस्तु तन्त्राणां स्मृतित्वाविशेषेऽपि मन्वादिस्मृतीनां कर्मकाण्डशेषत्वं तन्त्राणां तु ब्रह्मकाण्डशेषत्वमिति सिद्धान्तादुत्तरमीमांसीयदेवताधिकरणन्यायेन देवताविग्रहादेस्तान्त्रिकैरङ्गीकारात्तत्तत्कामनापूरकत्वादिगुणकं ब्रह्म ध्यातव्यमिति द्योतनमेव विशेषविधेः प्रयोजनम् । तथाच श्रुतिः 'अन्नादो वसुदानो विन्दते वसु य एवं वेदे'ति । अन्नमासमन्तादत्त इत्यन्नादः । वसुनो धनस्य दानं यस्मात्स वसुदानश्च परमेश्वरस्तमेवं प्रकारेण यो वेदोपास्ते स वसु अन्नं च विन्दत इति तदर्थात् । किंच । अन्नदायै नम इति मन्त्रेण सार्वकाम्यवचनेन भयहरणकामप्रयोगे क्रियमाणे गौणमुख्यान्यायेन तस्य मन्त्रस्य जघन्यवृत्त्या भयापहत्वप्रकारकस्मृतिजनकतायाः सिद्धत्वेऽप्यन्नकामप्रयोगे मुख्यवृत्त्यैवान्नप्रदत्वप्रकारकस्मृतिजनकतया देवताया अपि झडित्यर्थोपस्थितिस्तत्प्रसादोऽपि झडित्येव स्यादिति विशेषद्योतनमपि प्रयोजनम् । अत एव स्कान्दे सूतगीतायां नामसु गौणमुख्यभेदेन फलभेदः स्मर्यते—

नामानि सर्वाणि तु कल्पितानि स्वमायया नित्यसुखात्मरूपे ।
तथापि मुख्यास्तु शिवादिशब्दा भवन्ति संकल्पनया शिवस्य ।।

मुख्यशब्दजपतो मुनीश्वराः सत्यमेव परमेश्वरो भवेत् ।
तस्य वक्त्रकमले सदाशिवो नृत्यतिस्म परमेशया सह ।।

इत्यलं विस्तरेण ।।

**मन्त्राद्योजयति गुणी नवचरणैस्त्रिशदर्धाभः ।**
**एकार्धत्रयदेहो भूमदहारीतसप्तपाल्लेशः ।। ९ ।।**

इदानीं छलाक्षरसूत्रोक्तरीत्यैव प्रतिनामधेयमक्षराणि संचिख्यासुः श्लेषेण गुरुं प्रणमति—मन्त्रेति, मन्त्राणामाद्यो मूलकारणं श्रीगुरुसार्वभौमो जयति सर्वोत्कर्षेण वर्तते । 'मोक्षस्य मूलं यज्ज्ञानं तस्य मूलं महेश्वरः । तस्य पञ्चाक्षरो मन्त्रो

मन्त्रमूलं गुरोर्वचः' इति वचनात्। तमेव विशेषणैर्विशिनष्टि। गुणी परमार्थतो निर्गुणोऽपि विद्यावतारसिद्ध्यर्थं स्वीकृतानेकविग्रहः। नवे नित्यनूतने चरणे रक्तशुक्लाख्ये यस्य सः। तदुक्तं—

> वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम्।
> रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः।।

इति। अथवा 'पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनमि'ति कोशान्नवचक्रात्मकः। त्रैलोक्यमोहनादिसर्वानन्दमयान्तचक्रराजाभिन्न इति यावत्। त्रिशनामर्धं पञ्चदशाक्षराणि श्रीविद्यान्तर्गतानि तदाभस्तत्तुल्यः। तद्रूप इत्यर्थः। 'निरञ्जनः परमं साम्यमुपैती'ति श्रुतावभेदेऽपि तुल्यतोक्तिदर्शनात्। एको मुख्यश्चासावर्धत्रयदेहश्च अर्धं च त्रयं च। अध्युष्टमिति यावत्। तादृशी सार्धत्रिवलयाकारा कुण्डलिन्येव सर्वदेवतारूपा देह आत्मा यस्य सः। भूतुल्यो मदो महामद इत्यर्थस्तं हरति। यद्वा भूमा ब्रह्मानन्दस्तं दत्तेऽत एव हारी मनोहरः। 'यो वै भूमा तत्सुख'मिति श्रुतेः। प्ताजटाः ताभिः सहितः सप्तः परमशिवस्तत्पादौ लाति आदत्ते विषयीकरोतीति सप्तपाल्ला शिवपदभक्तिः इता प्राप्ता सप्तपाल्ला येन सः अत एवेशः परमशिवः शिवभक्तिबललभ्यतदभेद इति समुदितार्थः। प्ता इत्येकाक्षरस्य जटावाचकत्वं 'सप्ताः सप्ताश्वनुन्नारुणकिरणनिभाः पातु बिभ्रत्त्रिनेत्रः' इति प्रयोगे प्रसिद्धम्। आदित्यपुराणप्रसिद्धपश्चिमोदधितीरस्थसप्तकोटीश्वरनामनिर्वचनश्लोकेऽपि।

> अद्याप्यस्ति विपश्चितामपि महत्संदेहकोटिद्वयं यः श्रुत्या जगदीश्वरो
> निगदितः सप्तः किमप्तोऽथ सः।
> तत्रेशः प्रथमैव कोटिरिति किं निश्चायनाय स्फुटं नाम्नैव प्रथितो-
> ऽभवत्परशिवः श्रीसप्तकोटीश्वरः।।

इति। अत्र सप्ताप्तशब्दौ सजटनिर्जटवाचिनौ सन्तौ शिवविष्णुपरौ। ईदृश्या च रीत्योत्तरश्लोकानामपि प्रकृतोऽप्रकृतो वार्थो वर्णयितुं शक्योपि ग्रन्थविस्तरभयात्पण्डितैरूहितुं शक्यत्वान्निष्प्रयोजनत्वाच्च तमुपेक्ष्य नामविभागपरत्वेनैव व्याख्यान्तरं प्रस्तूयते। मन्त्राद्यो जयति मन्त्राणामादावुच्चारणीयः प्रणवो जयति। 'ॐकारो वर्तुलस्तारो मन्त्राद्यः प्रणवो ध्रुवः' इति मातृकाकोशात्। कालिकापुराणे 'स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते' इत्यनेनादावन्ते चोच्चार्यत्वेन प्रणवस्य विधानात्। अत एव शाट्य[1]यनः 'दानयज्ञतपःस्वाध्यायजपध्यानसंध्योपासनप्राणायामहोमदैवपित्र्यमन्त्रोच्चारणब्रह्मारम्भादीनि प्रणवमुच्चार्य प्रव[2]र्तये'दिति।

---

1. शाकट्यः 2. प्र र्यादत.

कात्यायनोऽपि प्रणवं प्रकृत्य 'ब्रह्मारम्भे विरामे च यागहोमादिषु शान्तिपुष्टिकर्मसु चान्येष्वपि काम्यनैमित्तिकादिषु सर्वेषु विनियोगोऽस्ये' ति । दाल्भ्यपरिशिष्टेपि—

> ब्रह्मयज्ञो जपो होमो देवर्षिपितृकर्म च ।
> अनोंकृत्य कृतं सर्वं न भवेत्सिद्धिकारकम् ॥

इति । अत एव 'ॐकारेण सर्वा वाक् संतृण्णे' ति श्रुतिः । सर्वो मन्त्रः संपुटित इति तदर्थः । 'उतृदिर् हिंसानादरयो' रिति धातोः समुपसृष्टत्वे उभयमेलनार्थकतया दीर्घसोमे संतृण्ण[1]विति विधौ 'न संतृणत्त्यसंतृणेहि हनु' इति निषेधेऽपि प्रयोगदर्शनात् । ननु सहस्रनामस्तोत्रस्य मन्त्रत्वे प्रणवपुटितत्वं युज्येत तदेव तु न संभवति मानाभावात् । अत एव त्रिशत्यां मन्त्रत्वस्याहत्य विधिः ।

'केवलानामबुद्धिस्ते न[2] कुंभज । मन्त्रात्मकत्वमेतेषां नाम्नांनामात्मतापि च'

इति चेत् न । 'तच्चोदकेषु मन्त्राख्ये' त्यधिकरणे मन्त्रप्रसिद्धिविषयत्वस्यैव मन्त्रलक्षणत्वोक्तेः । अत्र च तान्त्रिकाणां मालामन्त्रत्वव्यवहारदर्शनात् 'शिवशंकररुद्रेशमहेश्वरमृडाव्यये' ति संदर्भे तु मन्त्रप्रसिद्ध्भावेन नामत्वमात्रम् । 'केवलं नामबुद्धिस्ते' इति त्वीदृशसंदर्भस्य परिसंख्यापकं न पुनः सहस्रनामसमाख्यातस्य । अत एव 'सहस्रनाममन्त्रोऽयं जपितव्यः शुभाप्तये' इत्यादि वचनानि गणेशसहस्रनामादिषु दृश्यन्ते इत्याद्यन्तयोः प्रणव आवश्यकः । तस्य वर्णभेदेन स्वरभेदादयः कालिकापुराणे स्मर्यन्ते—

> स उदात्तो द्विजातीनां राज्ञां स्यादनुदात्तकः ।
> प्रचितश्चोरुजातानां मनसापि तथा स्मरेत् ॥
>
> चतुर्दशस्वरे योऽसौ शेष औकारसंज्ञकः ।
> सचानुस्वारचन्द्राभ्यां शूद्राणां सेतुरुच्यते ॥
>
> शूद्राणामादिसेतुर्वा द्विसेतुर्वा यदृच्छया ।
> द्विसेतवः समाख्याताः सर्वथैव द्विजातयः ॥

इति । द्विजातीनां ब्राह्मणानाम् । राज्ञां क्षत्रियाणाम् । ऊरुजातानां वैश्यानाम् । मनसापीति वैश्यमात्रान्वयि । चन्द्रो नादः । सेतुः प्रणवः । द्विसेतव आद्यन्तप्रणवोच्चारणशीलाः । द्विजातयस्त्रैवर्णिका इति तदर्थः । यत्त्वाथर्वणब्राह्मणे वेदभेदेन स्वरव्यवस्था श्रूयते 'स्वरितोदात्त एकाक्षर ओंकार ऋग्वेदे, त्रैस्वर्योदात्त एकाक्षर ओंकारो यजुर्वेदे, दीर्घप्लुतोदात्त एकाक्षर ओंकारः सामवेदे, ह्रस्वोदात्त एकाक्षर ओंकारोऽथर्ववेदे स सामवेदविषयिण्वेवेति नात्रोपयुज्यते ॥ एवं प्रणवं प्रदर्श्य श्रीमातेत्यादीनि त्रिषष्टिनामानि विभज्यन्ते—गुणीत्यादिना । यद्यप्यत्र मूलकारैः

स्वशास्त्रोपयुक्तपरिभाषा न्यायमूलत्वेन विदुषां सुलभा इत्याशयेनैकीकृत्य न दर्शितास्तथापि शिष्यानुजिघृक्षयास्माभिरत्र कथ्यन्ते । कटपयवर्गभवैरिति पूर्वोक्तश्लोके ङकारञ[1]कारयोः शून्यसंकेतः कृतः इहतु दशत्वसंख्यायां क्रियते, तस्या एवापेक्षणात् शून्यस्यानपेक्षणाच्च । ककारादिभिर्द्योतितसंख्याया आश्रयास्त्वेकैकनामान्तर्गताक्षराणि स्वररूपाणि । 'चतुरश्छ[2]यतावाद्याक्षरलोपश्चे' ति पाणिनिसूत्रे 'एष वै सप्तदशः प्रजापति' रित्यादिश्रुतिषु च संख्यायाः स्वरमात्राश्रयत्वदर्शनात् । एकद्वित्र्यादिसंख्यावाचकपदानि तु यत्र पादोऽर्धो वा विशेष्यत्वेन निर्दिश्यते तत्र तानि पादा[3]र्थात्मकनामसंख्यापराणि । यत्र च विशेष्यनिर्देशमन्तरेण प्रयुज्यन्ते तत्र समसंख्याकाक्षरनामसंख्यापराणि । तत्राप्यर्धस्यार्धयोरर्धानां वा समाप्तिपर्यन्तं यानि नामानि तत्पराण्येव न पुनस्त्रिपादपञ्चपादान्तर्गतनामपराणि । एकद्वित्रिचतुःपादाद्यन्तर्गतवर्णानां न सांकेतिकार्थं प्रयोग इति । एतदुदाहरणानि न्यायाश्चावसर एव व्यक्तीभविष्यन्ति । गुणी गकारणकारौ त्रित्वपञ्चत्वसंख्यापरौ तस्याश्च नामविशेष्यकत्वे त्रीणि पञ्च च नामानीति पर्यवसानात्तावता कतिभिरक्षरैरेकैकं नामेत्याकाङ्क्षाया अनिरामेनाकाङ्क्षितविधान [4]ज्याय इति सोमक्रयनेष्टचधिकरणन्यायेनाक्षराण्येव विशेष्याणि स्वीक्रियन्ते । तेषां च नामान्तरसांकर्येण विशेष्यत्वस्वीकारेऽप्युक्तदोषतादवस्थ्यादेकस्य नाम्नस्त्रीण्येवाक्षराणीत्यादिरेवार्थः सिद्ध्यति । चतुरक्षरान्तर्गताक्षरत्रयस्यावयुत्यानुवादे वैयर्थ्यात् । एतेन अज्झाटू इति छलाक्षरसूत्रेऽचां षोडशसु संकेतः । इयं च संख्याऽक्षरनिष्ठा, हलिभक्ता संख्या तु नामनिष्ठा । ततश्च इत्युक्ते एकं नाम त्र्यक्षरमित्यर्थ इति भ्रमो[5] निरस्तः । प्रकृते वर्णकत्वादेवैकं नामेत्यर्थस्य लाभात् । प्रथमं नामेति तु वर्णप्राथम्यादेव सेत्स्यतीत्यंशस्तु सूत्रेष्वत्रापि समानः । नव चरणा यस्मिन्वाक्समूहे स नवचरणः । तस्य नवधा विभज्य निर्देशबलादेकैकस्य चरणस्यैकैकनामात्मकत्वं ध्वन्यते । तथाच नवशब्दोदिता संख्या नामस्वेवान्वेति नाक्षरेषु । अत्र नवशब्दान्नवत्वसंख्याया इव नकारवकारोदितदशचतुःसंख्ययोर्झडिति न प्रतीतिः । अतः प्रतीतिशैघ्र्यमान्थर्याभ्यां संख्यावाचकपदाक्षराणामिह संभूयैकार्थप्रत्यायकत्वमेव । एकत्र चरणादिशब्दसमवधानमहिम्ना संख्यावाचकशब्दानां नामधेयान्वितस्वार्थकत्वमेव नाक्षरान्वितस्वार्थकत्वमिति सिद्धे चरणादिविशेष्यसमर्पकपदाभावेऽपि नामान्वितस्वार्थकत्वं क्लृप्तं न दण्डेन पराणुद्यते । 'एकत्र निर्णीतः शास्त्रार्थोऽसति बाधकेऽन्यत्रापी' ति न्यायात् । 'आदित्यः प्रायणीयः पयसि चरु' रिति विधेरस्थालीवचनस्यापि चरुशब्दस्यादितिमोदनेनेति वाक्यशेषवशादोदनार्थकत्वे निर्णीते सौर्यं चरुमित्यादौ वाक्यशेषाभावेऽप्योदनार्थकत्वानपायात् । ईदृशासांकार्यसिद्ध्यर्थमेव चाक्षरसंख्यायां वाच्यायां गुणादिशब्दान्तराणामेव प्रयोगो न पुनर्नवदशादिसंख्यापदाक्षराणामिति व्यवस्थापि

---

1 ञकारयोः 2 चतुरश्छयता 3 पादार्थात्मक 4 ज्याय 5 भ्रमो

सिध्यति। त्रिशदर्धाः। समांशस्याप्यंशत्वमात्रविवक्षायामनियतलिङ्गोऽर्धशब्दः। 'अर्ध नपुंसक' मिति सूत्रे कः पुनः पुंलिङ्ग इति भाष्यस्यानियतलिङ्गपरत्वेनैव कैयटेन व्याख्यानात् वा, 'पुंस्यर्धः' इति कोशाच्च। तेन षोडशषोडशाक्षराणि त्रिशन्नामानीत्यर्थः। भकारस्य चतुरक्षरात्मकमेकं नामेति एकपदस्य तदुत्तरमेकनामेत्यर्थे सिद्धन्यायात् द्वादशाक्षरमिति सिध्यति। एकस्मिन्नर्थे तावत एव परिशेषात्। अर्धात्पर[1]तोऽर्धान्तरग्रहणे तन्मध्ये नामसमाप्त्ययोगात्। 'यतिर्विच्छेदः' इति पिङ्गलसूत्रेणार्धान्तेऽवसानविधानात्। अवसानस्य च पदसमाप्तिव्याप्यत्वात्। नचार्धान्न्यूनमेव नाम समाप्यतामिति वाच्यम्। तथात्वे एकपदवैयर्थ्यात्। रूपपदेन द्वादशसंख्याया उक्तपरिभाषानुसारेण वक्तुं शक्यत्वेऽपि द्व्यक्षरैकाक्षरे [2]नामनी इति भ्रमो माप्रसंजीति तथा नोक्तम्। अत एव दशाधिका संख्या पारिभाषिकानेकाक्षरसाध्यत्वान्नेह परिभाषया निर्दिश्यत इत्यपि नियमो द्रष्टव्यः। ततोऽर्धत्रयं त्रीणि नामानि ततोऽष्टाभिरष्टाभिरक्षरैर्द्वे। ततश्चतुर्भिः पञ्चभिरष्टाभिर्द्वाभ्यां षड्भिश्चाक्षरैः षण्णामानि। ततः सप्तभिश्चरणैः सप्त। ततस्त्रिभिः पञ्चभिर्द्वे नामनी इत्येवं श्लोकार्थः ॥ ७ ॥ अथ नाम्नामर्थः प्रस्तूयते। तेषु स्त्रीपुंनपुंसकलिङ्गानां नाम्नां विशेषणरूपत्वेन तेषां क्रमेण चिदात्मा ब्रह्मेत्यादीनि विशेष्यसमर्पकपदानि निर्दिष्टानि। पदानुसारीण्येव हि लिङ्गानि न तु वास्तविकं ब्रह्मण्येकमपि लिङ्गं 'न स्त्री न षण्ढो न पुमान्[3]जेशितु' रिति विष्णुभागवतात्।

न त्वमम्ब पुरुषो न चाङ्गना चित्स्वरूपिणि न षण्ढतापि ते।
नापि भर्तुरपि ते त्रिलिङ्गता त्वां विना न तदपि स्फुरेदयम् ॥

इति कालिकादासोक्तेश्च। अत एव देवताया ध्यानेऽप्यैच्छिक एव विकल्पः स्मर्यते। 'पुंरूपं वा स्मरेद्देवि[4] स्त्रीरूपं वा विचिन्तयेत्। अथवा निष्कलं ध्यायेत्सच्चिदानन्दलक्षणमि' ति विशेष्यनिर्देशायैव वा लिङ्गत्रयसाधारणस्य प्रणवस्यादौ त्प्रयोगः। तस्य च समस्तस्य ब्रह्मैवार्थः। 'ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति भगवद्वचनात्। अकारोकारमकारनादबिन्दुभिर्व्यस्तैर्ब्रह्मविष्णुरुद्रेश्वरसदाशिवानां कथनात्तत्पञ्चकरूपमिति वा। तदुक्तं बृहन्नारदीये

अकारं ब्रह्मणो रूपमुकारं विष्णुरूपवत्।
मकारं रुद्ररूपं स्यादर्धमात्रं परात्मकम् ॥
वाच्यं तत्परमं ब्रह्म वाचकः प्रणवः स्मृतः।
वाच्यवाचकसंबन्धस्तयोः स्यादौपचारिकः ॥

इत्यत्र। रूपपदं वाच्यवाचकयोरभेदाभिप्रायेणाभिन्नपरम्। अत एव भेदघटितो वाच्यवाचकभावसंबन्ध औपचारिकोऽमुख्यः। व्यावहारिक इत्यर्थः। अनेनैवाशयेन

1. अर्थात्परतोऽर्थान्तर, 2. द्वे नामनी, 3. नपुमान्नजन्तु, 4. स्मरेद्देवीं.

पश्यन्तीति — पश्यतीति पश्यन्ती । अस्या एवोत्तीर्णेत्यपि संज्ञा । उक्तं च सौभाग्यसुधोदये—

> पश्यति सर्वं स्वात्मनि करणानां सरणिमपि यदुत्तीर्णा ।
> तेनेयं पश्यन्तीत्युत्तीर्णेत्यप्युदीर्यते माता ॥

इति ।

परदेवतेति— परा उत्कृष्टा चासौ देवता च परदेवता । उपास्येष्वन्यतम-पेक्ष्यर्थः ।

मध्यमेति— मध्ये स्थिता मध्यमा । तदुक्तं—

> पश्यन्तीव न केवलमुत्तीर्णा नापि वैखरीव बहिः ।
> स्फुटतरनिखिलावयवा वाग्रूपा मध्यमा तयोरस्मात् ॥

इति ।

वैखरीति— 'विशेषेण खरः कठिनस्तस्येयं वैखरी सैव रूपं यस्याः । स्थूलता-मापन्नेति यावत् । वै निश्चयेन खं कर्णविवरं राति गच्छतीति वैखरीति सौभाग्य-सुधोदये कथिता । 'वैखराख्येन प्राणेन प्रेरिता वैखरी पुन' रिति [illegible]-द्वैखरप्राणजन्येति वा ।

भक्तमानसहंसिकेति— भक्तानां मानसे चित्ते [illegible] मानसाख्ये सरोविशेषे हंसीव हंसिका । परिज्ञानत्वात्कप्रत्ययः ॥ १३२ ॥

> कामेश्वरप्राणनाडी कृतज्ञा कामपूजिता ।
> शृङ्गाररससंपूर्णा जया जालन्धरस्थिता ॥ १३३ ॥

कामेश्वरेति—कामेश्वरस्य शिवकामस्य प्राणनाडी जीवनाडीव । [illegible] शङ्करा-चार्यभगवत्पादैः 'करालं यत्क्ष्वेलं कवलितवतः कालकलना न शम्भोस्तन्मूलं तव जननि ताटङ्कमहिमे'ति ।

कृतज्ञेति—कृते सुकृतदुष्कृते जानातीति कृतज्ञा ।

> सूर्यः सोमो यमः कालो महाभूतानि पञ्च च ।
> एते शुभाशुभस्येह कर्मणो नव साक्षिणः ॥

इत्युक्तनवसाक्षिकेति वा । कृतस्योपकारस्य ज्ञानेन प्रत्युपकर्त्री वा । कृतवत् [illegible] ज्ञानं यस्या इति वा । कृतादियुगेषु धर्मस्येव ज्ञानस्याप्युत्तरोत्तरं ह्रासात्कृते यथा पूर्णं ज्ञानं तादृशज्ञानवतीत्यर्थः । यद्वा द्यूतशास्त्रे कृतत्रेताद्वापरकलिनामानि चत्वा[illegible]

स्थानानि प्रसिद्धानि । तानि चतुरित्यङ्कयोगात् कृतादीन्यपि दशादित्र्येकरूपाणि । पूर्व-पूर्वतुरो उत्तरोत्तरस्यानामन्तर्भावात् । तथाच श्रूयते 'ते वा एते पञ्चान्ये पञ्चान्ये दशसन्तस्तत्कृतं'मिति दशानां कृतसंज्ञा । अत एव कृतयुग जितवता भताद्यूनत्रय-मपि जितं भवतीति द्यूतशास्त्रमर्यादापि । श्रूयते च 'कृतायविजिताय धरेयाः संयन्ती' ति । यथा द्यूतक्रीडा कृतस्योऽयो विजितो येन तस्मै अवरे तदधस्तना अयास्त्रेतादिक्रीडाः संयन्ति उपनमन्ते जिता भवन्तीति तदर्थात् । तेन कृतं यथा सर्वव्यापकमेव सर्वविषयकं ज्ञानं यस्या इत्यर्थः । कृतं जानातीति वा । जितं सह द्यूतक्रीडायामवश्यं कृतजत्वाद्देव्या एव जय इति ध्वन्यम् ।

कामपूजितेति—कामेन मन्मथेन पूजितोपासिता । अत एव बारुणोपनिषदि—

पूजा निर्वृत्या वैदेह अचेता यश्च चेतनः ।

स न मोणमविन्दत् ॥

इति श्रूयते । लक्ष्म्याः पुत्रोऽनङ्गो विश्वारत्नं प्राप्तवानित्यर्थः ।

शृङ्गाररसेति—शृङ्गाररसेन सम्यक् पूर्णा । अथवा उत्तरत्र जालन्ध्र-प्राड्भाणपीठयोः प्रसङ्गदर्शनादनयोर्नाम्नोः कामरूपपूर्णगिरिपरत्वं नामैकदेशान्याये-नाश्रेयम् । सम्यक् पूर्णे आस्ते इति संपूर्णास् । आस्तेः क्विपि रत्वयत्वयलोपाः । शृङ्गपदेन द्विसंख्या । आरपदेन दलम् । रसाः षट् । द्विदलपट्कं द्वादशदलम् । अनाहतचक्रमिति यावत् । अभिभूतं प्रसिद्धस्य पीठचतुष्टयस्याध्यात्मं मूलाधाराना-हताज्ञाब्रह्मरन्ध्रस्थिते तन्त्रेषु कथनाद्द्वादशदलेति पूर्णगिरिविशेषणम् । यद्वा शृङ्ग प्रधानभूतं अररं कवाटं आवरकाविद्येति यावत् यस्याः सा शृङ्गारा । रसपूर्णेन तद्गुणा सहिता रसपूर्णा । उभयोः कर्मधारये शबलब्रह्मशुद्धब्रह्मोभयवतीति यावत् ।

जयेति—जयस्वरूपत्वाज्जया । पाद्मे 'जया वराहशैले स्थि' ति परिगणिता ।

जालन्धरेति—जालन्धरे पीठविशेषे स्थिता । पाद्मे 'जालन्धरे विष्णुमुखी' ति प्रतिपादितविष्णुमुख्याख्या ॥ १३३ ॥

ओड्याणपीठनिलया बिन्दुमण्डलवासिनी ।
रहोयागक्रमाराध्या रहस्तर्पणतर्पिता ॥ १३४ ॥

अथ नामत्रयाणामपङ्क्ते चतुश्चत्वारिंशत्पदानि विभजते ॥

द्वे ऐ द्वेद्वे भसत्रोडुवभसिलेगशीलजलमोहैः ।
द्वयर्धवसुभंसगाः स्त्रो शुलि ञलशोभा भगोलः खे ॥ १७ ॥

द्वे इति—अत्र तृतीयं द्वे इति पदं षडक्षरनामद्वयपरम् इतराणि त्वष्टाक्षर-

ओड्याणेति—ओड्याणाख्यं पीठमेव निलयो वासस्थानं यस्याः ।

बिन्दुमण्डलेति—बिन्दुरेव मण्डलं सर्वानन्दमयात्मकं चक्रवालं तत्र वसति । बिन्दुः शुक्लं तस्य मण्डलं ब्रह्मरन्ध्रमित्यन्ये ।

रहोयागक्रमेति—'सहस्रारे पद्मे सह रहसि पत्या विहरसे' इत्याचार्योक्तेः । रहसि विविक्ते क्रियमाणो यागश्चिदग्नौ अनङ्क[1]कुण्डलन्यधिष्ठिते पुण्यादिहोमात्मकः रूपो रहोयागस्तस्य क्रमेण प्रयोगेणाराध्या । 'यज देवपूजासंगतिकरणदानेष्वि'ति धातुपाठादेकान्तसंगतिरेव वा रहोयागः तत्र क्रमेण पादविक्षेपेणाराध्या प्राप्या । यदाहापस्तम्बः

न शब्दशास्त्राभिरतस्य मोक्षो न चैव रम्यावसथप्रियस्य ।
न भोजनाच्छादनतत्परस्य न लोकचित्तग्रहणे रतस्य ॥
एकान्तशीलस्य दृढव्रतस्य मोक्षो[2] भवेत्प्रीतिनिवर्तकस्य ।
आध्यात्मयोगे[3] निरतस्य सम्यङ्मोक्षो[4] भवेन्नित्यमहिंसकस्य ॥

इति ।

रहस्तर्पणेति—अरुणोपनिषदपि 'यदि प्रविशेत् मिथो चरित्वा प्रविशेदि'ति । श्रीविद्योपासनामार्गे रहःसंपाद्येव प्रविशेदिति तदर्थः । 'मिथोऽन्योन्यं रहस्यपी'ति कोशात् 'प्रकाशामर्शहस्ताभ्यामवलम्ब्योन्मनी स्रुचम् । धर्माधर्मकलास्नेहं पूर्णवह्नौ जुहोम्यह'मिति । मन्त्रोक्तार्थविभावनं—

अन्तर्निरन्तरनिरिन्धनमेधमाने मोहान्धकारपरिपन्थिनि संविदग्नौ ।
कस्मिंश्चिदद्भुतमरीचिविकासभूमौ विश्वं जुहोमि वसुधादिशिवावसानम् ॥

इति मन्त्रार्थविभावनं च रहस्तर्पणं तेन तर्पिता ॥ १३४ ॥

सद्यःप्रसादिनी विश्वसाक्षिणी साक्षिवर्जिता ।
षडङ्गदेवतायुक्ता षाड्गुण्यपरिपूरिता ॥ १३५ ॥
नित्यक्लिन्ना निरुपमा निर्वाणसुखदायिनी ।
नित्याषोडशिकारूपा श्रीकण्ठार्धशरीरिणी ॥ १३६ ॥

सद्य इति—तादृशयागतर्पणाभ्यां सद्यस्तदात्व एव प्रसीदतीति तथा ।

विश्वसाक्षिणीति—विश्वस्य द्रष्ट्री साक्षादव्यवधानेन स्वरूपात्मकबोधेनेति विश्वसाक्षिणी ।

साक्षिवर्जितेति—'साक्षाद्द्रष्टरि संज्ञाया'मितीन् । सर्वसाक्षिण्याः साक्ष्यन्तराभावात्साक्षिवर्जिता ।

1. कनक 2. पञ्चेन्द्रियप्रीति 3. विद्यारतमानसस्य 4. मोक्षो ध्रुवो नित्य

**षडङ्गदेवतेति**—षडवयवकान्यङ्गानि हृदयशिरःशिखानेत्रकवचास्त्राणि तदा देवताभिः शक्तिभिर्युक्ता आवृता । **ज्ञानार्णवादिषु**—

> अथाङ्गावरणं कुर्याच्छ्रीविद्यामनुसंभवम् ।
> षडङ्गावरणाद्बाह्यसमीपे क्रमतोऽर्चयेत् ।।
> परिवारार्चनं पश्चादादावङ्गावृतिः प्रिये ।

इत्यादिव्यवहारदर्शनेन तासामप्यावरणदेवतात्वात्, ताभिः सहैव नवावरणसंख्यापूर्तेः संभवाच्च । षण्णामङ्गानामधिष्ठात्री देवता महेश्वर एव । तेन युक्ता वा। उक्तं च **देवीभागवते**—

> सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
> अनन्तता चेति विधेर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ।।

इति । शिक्षाकल्पादिषडङ्गाभिमानिदेवतासाहित्याच्छ्रुतिस्वरूपेति वार्थः ।

**षाड्गुण्येति**—संधिविग्रहयानासनद्वैधीभावसमाश्रयाणां कामन्दकोक्तानामैश्वर्य धर्मयशःश्रीज्ञानवैराग्याणां पुराणप्रसिद्धानां वा षण्णां गुणानां समूहः षाड्गुण्यं तेन परितः पूरिता ।। १३५ ।।

**नित्यक्लिन्नेति**—नित्यं दयया क्लिन्ना सार्द्रा । तृतीयातिथिनित्या नित्यक्लिन्नेत्युच्यते । इयं **गरुडपुराणे** 'नित्यक्लिन्नामथो वक्ष्ये त्रिपुरां भावितमुनिनदा' मित्यादिना प्रपञ्चिता तद्रूपा वा ।

**निरुपमेति**—निर्गतोपमा सादृश्यं यस्याः सा निरुपमा । 'न तस्य प्रतिमा अस्ती' ति श्रुतेः ।

**निर्वाणेति**—निर्गतं वाणं शरीरं यस्मिंस्तदशरीरम् । 'एतद्वाणमवष्टभ्ये'ति श्रुतौ वेदान्तिभिर्गीर्वाणपदे च मीमांसकैर्बाणशब्दस्य शरीरपरत्वेन व्याख्यानात् । 'शरीरे बाणमुद्गला' वित्यमरशेषाच्च । अशरीरं इयत्तानवच्छिन्नं सुखं मोक्षाख्यं ददातीति तथा । कौर्मे हिमवन्तंप्रति देवीवाक्यं—

> मामनादृत्य परमं निर्वाणममलं पदम् ।
> प्राप्यते नहि शैलेन्द्र ततो मां शरणं व्रज ।।
>
> एकत्वेन पृथक्त्वेन तथाचोभयतोऽपि वा ।
> मामुपास्य महाराज ततो यास्यसि तत्पदम् ।।

इति ।

**नित्येति**—षोडशैव षोडशिकाः नित्याश्च ताः षोडशिकाश्च कामेश्वर्यादि-

आद्याया ललितायाः मूर्त्याः पञ्चदशाङ्गगाः ।
ललिताङ्गस्वरूपेण सर्वासामात्मविग्रहा ॥

इति । षोडश्येव षाडशिकेति वा । नित्या विकल्परहिता आसमन्तात्षोडशिको ग्रह-यागाभ्यासविकल्पो येषु क्रतुषु तैरासमन्ताद्रूप्यते प्रीयत इति वा । अतिरात्रे विकल्पितस्यापि षोडशीग्रहस्य 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यादिवचनैरुत्तरक्रतुषु नित्यत्वात् । उक्तं च ललितारहस्ये—

कोटिभिर्वाजपेयानां यथा षोडशकोटिभिः ।
प्रीयतेऽम्बा तथैकेन षोडश्युच्चारणेन सा ॥

इति ।

श्रीकण्ठेति —श्रीर्विषं कण्ठे यस्य सः श्रीकण्ठः शिवस्तस्यार्धं शरीरमस्याः । श्रीकण्ठेनार्धशरीरवतीति वा । तदभिन्नार्धशरीरशालिनीति यावत् । अत एवैकस्यैव द्व्यात्मकत्वं बृहदारण्यके श्रूयते 'आत्मैवेदमग्र आसी' दिति प्रक्रम्य 'स इममेवात्मानं द्वेधापातयत्ततः पतिश्च पत्नी चाभवताम्' इति । अथवा श्रीकण्ठवदर्धे शरीरे यस्याः श्रीकण्ठस्य यथा किंचिन्नीलं किंचिदुज्ज्वलं शरीरं तद्वदुभयरूपेति यावत् । तदुक्तं वायुपुराणे—

तत्र या सा महाभागा शंकरस्यार्धकायिनी ।
कायार्धं दक्षिणं तस्याः शुक्लं वामं तथा सितम् ॥
आत्मानं विभजस्वेति प्रोक्ता देवी स्वयंभुवा ।
तदैव द्विविधा भूता गौरी कालीति सा द्विजा ॥

इति । यद्वा । 'अः श्रीकण्ठः सुरेशश्च ललाटं केशवोऽमृते' ति मातृकाकोशाच्छ्रीकण्ठोऽकारः स एवार्धं शरीरमस्या वाग्रूपाया इत्यर्थः । तथा च श्रूयते 'अकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवती' ति । अकाररूपा पराख्या प्रथमा वागेव वैखर्यात्मिका जातेति फलितार्थः । उक्तं च सूतसंहितायां—

वाग्भूता पराशक्तिर्या चिद्रूपा पराशिवा ।
वन्दे तामनिशं भक्त्या श्रीकण्ठार्धशरीरिणीम् ॥

इति । यद्वा एकार्धरूपाया देव्या अर्धान्तरः श्रीकण्ठः परिपूर्तिकर इति यावत् । तदपि लक्षितम् 'इच्छासंज्ञा च या शक्तिः परिपूर्णा शिवोदरे' ति । शैवे मातृकान्यासे पूर्णोदर्यादिशक्तिभिरर्धं श्रीकण्ठादिशिवैः पूर्यत इति फलितार्थः । यद्वा अकारस्य यः अभिव्यञ्जनदशायां कामकलासमानजातीयमर्धं तदभिन्नशरीरवतीति॥१२६॥

प्रभावतीति — प्रभा अणिमाद्या आवरणदेवताः । 'अणिमादिभिरावृतां

न्तराणीति प्राचां पक्षः 'किरणा गुणा न दव्वं तेपु पयासो गुणो न सो दव्वो' इति धर्मसंग्रहिण्यादौ ग्रन्थे हरिभद्रादिभिर्जैनसूरिभिरुट्टङ्कितः । 'किरणा गुणा न द्रव्यं तेषु प्रकाशो गुणो न स द्रव्य'मिति तु तच्छाया ।

**प्रभारूपेति**—ततश्च गुणगुणिनोरभेदादाह । प्रभारूपा अणिमाद्या देवताः स्वरूपमेव यस्याः । 'मनोमयो भारूप' इति श्रुतेः ।

**प्रसिद्धेति**—सर्वैरहमिति वेद्यत्वात्प्रसिद्धा । तथाच देवीभागवते 'तामहंप्रत्ययव्याजात्सर्वे जानन्ति जन्तव' इति । तत्रैव प्रथमस्कन्धारम्भे 'सर्वचैतन्यरूपां तामाद्यां विद्यां च धीमही'ति ।

**परमेश्वरीति**—परमा उत्कृष्टा च सेश्वरी स्वामिनी च ।

**मूलेति**—मूलस्य श्रीविद्यामन्त्रस्य प्रकृतिः कारणभूतप्रकाशविमर्शाख्याक्षरद्वयरूपा । सांख्यमतप्रसिद्धा वा मूलप्रकृतिः । यदाहुः—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥

इति । **मृगेन्द्रसंहितायां** तु 'महदादिसप्तकरूपसुषुम्णावेष्टिता कुण्डलिन्येवाष्टप्रकृतिरूपा मूलप्रकृतिरुच्यत' इत्युक्तं तेन तद्रूपा वा । अथवा पृथिव्यादीनामाकाशान्तानां मध्ये पूर्वपूर्वस्य विकृतिभूतस्योत्तरोत्तरं भूतं प्रकृतिः । आकाशस्य तु ब्रह्मैव प्रकृतिः । 'आत्मन आकाशः संभूत' इति श्रुतेः । तस्य तु न प्रकृत्यन्तरमतो मूलस्थानीया प्रथमा प्रकृतिरित्यर्थः । अत एव **पञ्चरात्रागमे** शिववाक्यम्—

प्रादुरासीज्जगन्माता वेदमाता सरस्वती ।
यस्या न प्रकृतिः सेयं मूलप्रकृतिसंज्ञिता ॥
तस्यामहं समुत्पन्नस्तत्त्वैस्तैर्महदादिभिः ।

इति । अत्रेदं बोध्यम्—नियतकालपरिपाकानां हि कर्मणां मध्ये परिपक्वानामुपभोगेन क्षयादितरेषां च पक्वानां भोगसंभवेन तदर्थायाः सृष्टेरनुपयोगात्प्राकृतप्रलयो भवति । तदा ग्रस्तसमस्तप्रपञ्चा माया स्वप्रतिष्ठे परमशिवे निष्कले विलीना सती यावदवशिष्टकर्मपरिपाकं तथैव तिष्ठति । तदुक्तं 'प्रलये व्याप्यते तस्यां चराचरमिदं जग'दिति । **विष्णुपुराणेऽपि**—

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
तेजस्यापः प्रलीयन्तो तेजो वायौ प्रलीयते ॥
वायुः प्रलीयते व्योम्नि तदव्यक्ते प्रलीयते ।

इति । अव्यक्तं माया । तस्याश्च लयो नाम मुक्ताविव नात्यन्तिको नाशः किंतु सुषुप्तावन्तःकरणवृत्तीनामिव मायावृत्तीनामनुदयादत्यन्तनिर्विकल्पात्मनः परमात्मप्रकाशस्य बलाद्भानमत्वेऽप्यप्रतिभातप्रायत्वम् । सर्वथा भानाभावे वस्तुन एवाभावापत्तेः इष्टापत्तावुत्तरत्र सर्गानुपपत्तेः । अविदिष्टैः प्राणिकर्मभिश्च तस्यां मायायां विलीयैश्च क्रमेण प्राप्तपरिपाकैः स्वफलप्रदानाय परशिवस्य सिसृक्षात्मिका मायावृत्तिरुत्पाद्यते । सैषा मायावस्था ईक्षणकामतपोविचिकीर्षादिशब्दैरुच्यते । 'स ईक्षत लोकान्नु सृजा' इत्यैतरेये । 'तदैक्षत बहु स्यां प्रजायेये'ति छान्दोग्ये । 'सोऽकामयत बहु स्यां प्रजायेये'ति तैत्तिरीये । 'तपसा चीयते ब्रह्मे'ति मुण्डके। तादृशवृत्तिविषयतया सविकल्पकत्वेन मायाया यत्स्फुरणं सोऽयमबुद्धिपूर्वकस्तमसः सर्गः प्रथमः । 'नासदासीन्नो सदासी'दित्यारभ्य 'तम आसीत्तमसा गूल्हमग्र' इत्यन्ता श्रुतिः 'तस्मादव्यक्तमुत्पन्न'मित्यादिस्मृतिरप्येतत्परैव । एतस्मादविभागापन्नगुणत्रयादव्यक्ततमःपदवाच्यादन्तर्विभागस्थगुणत्रयात्मकस्यैतदव्यक्तस्य महतः सर्गो द्वितीयः । तदुक्तं—

> अव्यक्तादन्तरुदितत्रिभेदग्रहणात्मकम् ।
> महन्नाम भवेत्तत्त्वं महतोऽहंकृतिस्तथा ।।

इति । तस्माद्बहिर्विभागगुणत्रयावस्थस्याहंकारस्य सर्गस्तृतीयः ।

> वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ।
> त्रिविधोऽयमहंकारो महत्तत्वादजायत ।।

इति वचनात् । अत्र भूतादेस्तामसत्वेन विशेषणादन्ययोः सात्विकराजसत्वे सूचिते। तत्र भूतादिनामकात्तामसादहंकाराद्रजसावष्टब्धात्पञ्चतन्मात्राणां सर्गश्चतुर्थः । वैकारिकनाम्नः सात्विकादहंकाराद्रजोवष्टब्धादेकादशेन्द्रियगणस्य सर्गः पञ्चमः । राजसात्तैजसादहंकारादुभयाधिष्ठातृदिग्वातार्कप्रचेतोऽश्व्यादिदेवतासर्गः षष्ठः। यदाहुः सांख्याः —

> सात्विक एकादशकः प्रवर्तते वैकृतादहंकारात् ।
> भूतादेस्तामसतस्तन्मात्रं तैजसादुभयम् ।।

इति । शैवमते तु सात्विकादहमो मनः, राजसादहमो दशेन्द्रियाणीति विशेषः । यदाहुः शैवाः —

> सात्विकराजसतामसभेदेन स जायते पुनस्त्रेधा ।
> स च तैजसवैकारिकभूतादिकनामभिः समुल्लसति ।।
> तैजसतस्तत्र मनो वैकारिकतो भवन्ति चाक्षाणि ।
> भूतादेस्तन्मात्राण्येषां सर्गोऽयमेतस्मात् ।।

इति । एते च षट्सर्गाः प्राकृताः । वृक्षादिरूर्ध्वस्रोतोरूपः पश्वादिस्तिर्यक्स्रोतोरूपो भूतप्रेतादिरर्वाक्स्रोत इति त्रयो वैकृताः । प्राकृतवैकृतात्मक एकः कौमारसर्ग इति । तदुक्तं विष्णुभागवते—

> आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः ।
> द्वितीयस्त्वहमो यत्र द्रव्यज्ञानक्रियोदयः ॥
> भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान् ।
> चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः ॥
> वैकारिको देवसर्गः पञ्चमो यन्मयं मनः ।
> षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभो ॥
> षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ।

इत्यादि । अत्राव्यक्ताख्यतमःसर्गस्य षष्ठत्वोक्तिः पाठक्रमानुसारेण । आर्थिकक्रमात्तु तस्य प्रथमत्वमेव । अस्मिन्नेवार्थे वायुपुराणादीन्यप्युदाहार्याणि । एवं प्राकृतवैकृत-सर्गाणां मध्ये उत्तरोत्तरस्य पूर्वपूर्वं प्रकृतिः अव्यक्तस्य तु ब्रह्मैव प्रकृतिरिति सर्व-सृष्टीनां मूलभूतत्वात्तस्य मूलान्तराभावाच्च मूलप्रकृतिरित्यर्थः । अत एव श्रुतौ 'इन्द्रियेभ्यः परा ह्यर्था' इत्यारभ्य 'महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गति' रिति । अथवा मकारः पञ्चमसंख्यातां तन्मा-त्राणां । लकारस्त्वव्यक्तमहदहंकाराणां त्रयाणां बोधकः । तेनाष्टविधा प्रकृति-रित्यर्थः । तथाच समाससूत्रं 'अष्टौ प्रकृतय' इति ।

**अव्यक्तेति**—अथ क्रमेण सर्व[1]स्वरूपैः स्तोतुमुपक्रमते । अव्यक्ता प्राथमिक-मायास्फूर्तिरूपा । **सांख्यमते** प्रधानप्रकृत्यादिपदवाच्यमव्यक्तं तद्रूपा वा । तदुक्तं **सांख्यसप्तत्याम्**

> सूक्ष्ममलिङ्गमचेतनमनादिनिधनं तथा प्रसवधर्मि ।
> निरवयवमेकमेव हि साधारणमेतदव्यक्तम् ॥

इति । पञ्चशिखाचार्यैरपि 'अनादिमध्यं महतः परं ध्रुवं प्रधानमव्यक्तमुशन्ति सूरय' इति । तच्च गुणत्रयसमष्टिरूपमेवेति 'सत्वादीनामतद्धर्मत्वं तद्रूपत्वात्' इति सांख्यप्रवचनसूत्रे स्पष्टम् । ब्रह्मैव वाऽव्यक्तपदेनोच्यते । 'तदव्यक्तमाह हि' त्यधिकरणे 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वे' त्यादिश्रुति-भिस्तथा निर्णयात् । विष्णुस्वरूपेति वार्थः ।

> प्रधानमव्ययं योनिरव्यक्तं प्रकृतिस्तमः ।
> विष्णोरेतानि नामानि नित्यं प्रसवधर्मिणः ॥

इति लैङ्गात् ।

---

1. सर्ग

व्यक्ताव्यक्तेति—व्यक्तं महत्तत्त्वं पूर्वसर्गादभिव्यक्तत्वान्महत्त्वाच्च । गत्वाद्व्यक्त आव्यक्तस्तज्जन्योऽहंकारः तदुभयस्वरूपिणीत्येकं पदम् । व्यक्तं भिन्नपदत्वं स्वीकृत्योत्तरत्र ब्रह्मजननीति नामद्वयस्यैक्यमपि कर्तुं युक्तं पौनरुक्त्यादिदोषाप्रसरात् । प्रत्युत वकारवकारादिनामप्रायपाठानुगुण्याच्च । अभिमन्तास्वरूपमहन्तात्मकमस्या इति योज्यम् । पराहन्तायास्त्रिपुरसुन्दरीरूपत्वात् । राख्यतत्त्वे तदभिव्यक्तेः । व्यक्तमव्यक्तं चेति स्वरूपे अस्या इति वा । भूतविकारसाहित्यराहित्यवतीत्यर्थः । तदप्युक्तं लैङ्गे—

> भूतभावविकारेण द्वितीयेन सदुच्यते ।
> व्यक्तं तेन विहीनत्वादव्यक्तमसदित्यपि ॥

इति । क्षराक्षररूपेति वार्थः 'उक्तमक्षरमव्यक्तं व्यक्तं क्षरमुदाहृत' मिति पुराणात् । समष्टिव्यष्टिरूपेति वा । 'समष्टिं विदुरव्यक्तं व्यक्तं व्यष्टिं ...' इति नृसिंहपुराणात् । त्रयोविंशतितत्त्वप्रकृतिरूपा वा

> त्रयोविंशतितत्त्वानि व्यक्तशब्देन सूरयः ।
> वदन्त्यव्यक्तशब्देन प्रकृतिं च परां तथा ॥

इति ब्रह्माण्डपुराणात् । अथवा व्यक्ताव्यक्ते च व्यक्ताव्यक्तं चेति पुनरेकशेषेण व्यक्तमव्यक्तं व्यक्ताव्यक्तं चेति त्रिविधलिङ्गरूपेत्यर्थः । तल्लक्षणानि शैवपुराणे—

> स्वायंभुवं बाणलिङ्गं शैललिङ्गमिति त्रिधा ।
> कीर्तितं व्यक्तमव्यक्तं व्यक्ताव्यक्तमिति क्रमात् ॥
> व्यक्तं भुक्तिप्रदं मुक्तिप्रदमव्यक्तमुच्यते ।
> भुक्तिमुक्तिप्रदं लिङ्गं व्यक्ताव्यक्तं प्रचक्षते ॥
> द्वित्रिस्तुलां समारूढं वृद्धिमेति न हीयते ।
> तद्बाणलिङ्गमुदितं शेषं शैलं विदुर्बुधा ॥

इति । अथवा पक्वमलेषु सुव्यक्तं पाशबद्धेष्वव्यक्तं स्वरूपमस्याः । तदुक्तं रहस्ये शक्तिपातशब्दार्थनिरूपणावसरे—

> व्यापिनी परमा शक्तिः पतितेत्युच्यते कथम् ।
> ऊर्ध्वादधोगतिः पातो मूर्तस्यासर्वगस्य च ॥
> सत्यं सा व्यापिनी नित्या सहजा शिववत्स्थिता ।
> किं त्वियं मलकर्मादिपाशबद्धेषु संवृता ॥
> पक्वदोषेषु सुव्यक्ता पतितेत्युपचर्यते ।

इति ॥ १३७ ॥

व्यापिनी विविधाकारा विद्याविद्यास्वरूपिणी ।
महाकामेशनयनकुमुदाह्लादकौमुदी ॥ १६८ ॥

व्यापिनीति— अहंकारत्रयकार्यरूपावशिष्टप्राकृतसर्गभितयात्मकतया प
द्व्यापिनी । सर्वजगद्व्यापिका वा ॥

इति श्रीभास्कररायेण कृते सौभाग्यभास्करे ।
चतुर्थशतकेनामूलपञ्चमी ज्वालिनी कला ॥ ४०० ॥

इति श्री ललितासहस्रनामभाष्ये चतुर्थशतकं नाम पञ्चमी कला ॥

विविधाकारेति— प्राकृता वैकृताः सर्गाः कौमारसर्गश्चेत्येवं विविधा
यस्याः सा ।

विद्याविद्येति— विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥

इति श्रुतौ प्रसिद्धे विद्याविद्ये । विद्या स्वात्मरूपं ज्ञानम् । अविद्या चरम
ज्ञानम् । तदुभयं स्वरूपमस्याः । उक्तं च बृहन्नारदीये—

तस्य शक्तिः परा विष्णोर्जगत्कार्यपरिक्षमा ।
भावाभावस्वरूपा सा विद्याविद्येति गीयते ॥

इति देवीभागवतेऽपि 'ब्रह्मवसाति दुष्पापा विद्याविद्यास्वरूपिणी' ति
स्थलान्तरे—

विद्याविद्येति देव्या द्वे रूपे जानीहि पार्थिव ।
एकया मुच्यते जन्तुरन्यया बध्यते पुनः ॥

इति । यद्वा विद्यैव चरमवृत्तिरूपं ज्ञानम् । अविद्या भेदभ्रान्तिरूपं ज्ञानम्
परब्रह्मात्मकं ज्ञानम् । स्वपदस्यात्मवाचित्वात् । 'स्वो ज्ञातावात्मनी' ति
एतत्त्रयं रूपमस्याः । उक्तं च लैङ्गे—

भ्रान्तिर्विद्या परं चेति शिवरूपमिदं त्रयम् ।
अर्थेषु भिन्नरूपेषु विज्ञानं भ्रान्तिरुच्यते ॥
आत्माकारेण संवित्तिर्बुधैर्विद्येति कथ्यते ।
विकल्परहितं तत्त्वं परमित्यभिधीयत ॥

महाकामेशेति—महांश्चासौ कामेशश्चेति वा महाकामो महेशः । महांश्चासावीशश्चेति वा महाकामेशस्तस्य नयने एव कुमुदे कैरवे [illegible]-ह्लादे विकासे सुखातिशयकृतनिमीलने वा कौमुदी चन्द्रिकेव । [illegible] चेति वा ।

> कुमुदं कैरवे रक्तपङ्कजे कुमुदः कपौ ।
> कौमुदः कार्तिके मासि चन्द्रिकायां च कौमुदी ॥

इति माधवः । अथवा — कुत्सिता नश्वरत्वाधि[illegible] मुत्प्रीतिर्येषां ते कुमुदो वैषयिकाः । अत एव तेषा[illegible] कुमुदि' ति शाश्वतः । 'स्यात्कुमुत्कृपणेऽन्यवदि' ति [illegible] । [illegible]-द्व्याप्तौ ह्लादः सुखातिशयो मोक्षरूप इति यावत् । [illegible] प्रापणेनेति तृतीयासमासः । शिवप्रापणजन्यस्य वैषयिका[illegible] कौमुदी प्रकाशिका ॥ १३८ ॥

> भक्तहार्दतमोभेदभानुमद्भानुसंततिः ।
> शिवदूती शिवाराध्या शिवमूर्तिः शिवंकरी ॥ १३९ ॥
>
> शिवप्रिया शिवपरा शिष्टेष्टा शिष्टपूजिता ।
> अप्रमेया स्वप्रकाशा मनोवाचामगोचरा ॥ १४० ॥

भक्तेति—भक्तानां हृदि भावनीयानि तमांस्यावरणशक्तिमन्त्यज्ञानानि तेषां भेदे नाशने भानुमतः सूर्यस्य भानुसंततिः किरणपरम्परेव । 'हृदयस्य हृल्लेखयदण्-लासेष्वि' ति हृदादेशः । 'तत्र भवः' इत्यण् ।

शिवेति—शिवो दूतोऽल्पं यथा भवति तथा संदेशप्रापको यस्याः सा शिवदूती। 'दूञ् उपतापे'। यथोक्तवदकृत्वा[2] दूतोऽप्युपतापकः । 'दूती संचारिका स्त्रिये' इति कोशे संचारशब्दोऽपि संदेशसंचारणपरः । दुनोतेर्निरुक्त्यां 'दुनिभ्यां दीर्घश्चे' ति दीर्घः । 'क्तादल्पाख्याया' मिति ङीप् । बहुव्रीहेः क्तान्तादन्तादल्पार्थे चास्ये स्त्रियां ङीपिति तदर्थः । उक्तं च मार्कण्डेयपुराणे—

> यतो नियुक्तो दौत्येन तया देव्या शिवः स्वयम् ।
> शिवदूतीति लोकेऽस्मिंस्ततः सा ख्यातिमागता ॥

इति । एतद्व्याख्याकारास्तु शिवेन संदेशं प्रापयतीति शिवदूती । गौरादिगणत्वान्ङीप् बहुव्रीहौ तु टाप् स्यादित्याहुस्तच्चिन्त्यम् । इयं च पुष्करा[illegible] तीर्थे स्थिता । तदुक्तं पद्मपुराणे पुष्करखण्डे 'अथ तेऽन्याः प्रवक्ष्यामि पुष्करे या व्यव-स्थिता' इति प्रकृत्य 'शिवदूती तथा देवी क्षेमा क्षेमंकरी सदे' त्यादि ।

---

1. महाकाम 2. यथोक्तवत्कृत्वा

शिवाराध्येति—शिवेनाराध्योपास्या । तदुक्तं ब्रह्माण्डपुराणे—

> शिवोऽपि यां समाराध्य ध्यानयोगबलेन च ।
> ईश्वरः सर्वसिद्धीनामर्धनारीश्वरोऽभवत् ॥

इति । शंकरोपासितचतुष्कूटविद्यास्वरूपा वा ।

शिवमूर्तिरिति—शिव एव मूर्तिः स्वरूपं यस्याः शिवशक्त्योरभेदात् । तदुक्तं—

> एको रुद्रः सर्वभूतेषु गूढो माया रुद्रः सकलो निष्कलश्च ।
> स एव देवी न च तद्विभिन्ना ह्येतज्ज्ञात्वैवामृतत्वं व्रजन्ति ॥

इति । शिवा मङ्गलमयी मूर्तिर्यस्या इति वा । शिवो मोक्ष एव रूपं यस्या वा । मोक्षस्यात्ममात्रस्वरूपत्वात् । तदुक्तं सौरसंहितायां चतुर्दशाध्याये 'अथ मुक्तेः स्वरूपं ते प्रवक्ष्यामि समासत' इत्यारभ्य

> तस्मादात्मस्वरूपैव परा मुक्तिरविद्यया ।
> प्रतिबद्धा विशुद्धस्य विद्यया व्यज्यतेऽनघ ॥

इत्यन्तम् ।

शिवङ्करीति—भक्तं शिवमेव करोति अविद्यापाशनिरासेन मुक्तप्राप्यं ब्रह्म करोतीत्युपचारात् । शिवं मङ्गलं करोतीति वा शिवंकरी । 'कृञो हेतुताच्छील्यानुलोम्येष्वि'ति टः । 'शिवशमरिष्टस्य करे' इति मुम् ॥ १३९ ॥

शिवप्रियेति—शिवस्य प्रिया । शिवः प्रियो यस्या इति वा ।

शिवपरेति—शिवात्परा शिवस्य शक्त्यधीनात्मलाभकत्वात् । शिवः परो यस्या इति वा । शिवप्रतिपादकत्वाद्वा शिवपरा । अयं शिवशब्द एतत्पर इत्यत्रैवमेव व्याख्यादर्शनात् ।

शिष्टेति—शिष्टान्यनुशिष्टानि विहितकर्माणि इष्टानि इच्छाविषयाः प्रियाणि यस्याः सा शिष्टेष्टा । 'इषु इच्छाया'मिति धातोः कर्मणि निष्ठायामिष्टमिति रूपम् । यद्वा शिष्टैर्विहितकर्मभिरिष्टा पूजिता । यजतेर्निष्ठायां संप्रसारणे 'व्रश्चे'ति षत्वे च रूपम् ।

> स्वस्ववर्णाश्रमैर्धर्मैः सम्यग्भगवदर्पितैः ।
> यत्पूजनं न तद्गन्धमाल्यादीनां समर्पणैः ॥

इति वचनात् । 'आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युत' इति महाभारतबृहन्नारदीयवचनाच्च । यद्वा

> न पाणिपादचपलो न नेत्रचपलो भवेत् ।
> न च वागङ्गचपल इति शिष्टस्य गोचरः ॥

पारंपर्यागतो येषां वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥

इति **वसिष्ठसूत्रोक्तलक्षणकाः** शिष्टास्ते इष्टा यस्याः सा । यद्वा शिष्टैरिष्टा पूजिता ।

**शिष्टपूजितेति**—इममेवार्थं स्पष्टमाचष्टे शिष्टपूजिता ।

**अप्रमेयेति**—प्रमातुं योग्या प्रमेया प्रमेया न भवन्तीत्यप्रमेया । अकारार्थैर्ब्रह्मविष्ण्वादिभिः प्रमेया वा । अप्सु प्रमेया वा । 'मम योनिरप्स्वन्तःसमुद्रे' इति श्रुतेः ।

**स्वप्रकाशेति**—स्वः आत्माभिन्नः प्रकाशो यस्याः । दृश्यत्वाभावेन पराप्रकाश्यत्वात् । 'अत्रायं पुरुषः स्वयंज्योति'रिति श्रुतेः । सुषु अप्सु प्रकाशो यस्या वा ।

**मनोवाचामिति**—मनांसि च वाचश्च मनोवाचस्तेषां तासां चागोचरा अविषयः। 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सहे'ति श्रुतेः । **विष्णुपुराणे** प्रह्लादवचनं च—

यातीतगोचरा वाचां मनसां चाविशेषणा ।
ज्ञानिज्ञानपरिच्छेद्या वन्दे तामीश्वरीं पराम् ॥

इति । 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरे'त्यादाविव गोचरशब्दस्य स्त्रीलिङ्गत्वम् । न विद्यते गोचरो यस्यामिति वा । वाङ्मनसविषय एकोऽपि पदार्थो यस्यां नास्ति । तद्गुणानामप्यानन्त्येन वाङ्मनसातीतत्वादिति भावः । यत्तु अन्त्या इत्यधिकृत्य 'निर्मन् द्वे क्तिष्ठे' इति छन्नाक्षरसूत्रद्वय पठ्यते । निः मन् क्तिः ष्ठा इत्येतदक्षरान्तानि चत्वार्येव नामानि द्विद्विपदघटितानि भवन्तीति तदर्थः। तत्समानविभक्तिकपदद्वयपरम् । 'अप्राप्ते वाक्यमर्थव'दिति न्यायेन तादृशस्थल एव नामद्वयभ्रमनिरासकत्वेन सार्थक्यात् । यथा 'परं ज्योतिः परं धाम' 'परा शक्तिः परा निष्ठे'ति । इदं तु भिन्नविभक्तिपदद्वयघटितमेकं नामेत्यदोषः। यद्यपि मनश्च वाचा च मनोवाचे ते च ते आमे च अपक्वे च मनोवाचामे । 'विशेषणं विशेष्येण बहुल'मित्युक्तेर्न पूर्वनिपातः । ते न भवत इत्यमनोवाचामे । तयोर्गोचरेत्येकपदमेवेदं नाम सुवचम् । 'यतो वाचो निवर्तन्ते' इति श्रुतेर्वेदैकवेद्यत्वश्रुत्या 'मनसैवानुद्रष्टव्य' इत्यादिश्रुत्या च सह विरोधस्य भामत्यां शक्तिलक्षणापरतया पक्वापक्वमनःपरतया च व्यवस्थाकल्पनेन परिहृतत्वात् । तथापि 'गस्थियादृढीठकां पृण' इति छलाक्षरसूत्रविरुद्धम् । तस्य च छाया 'पृकि[1]कुर्वीरिवदृढीठ-

1. अस्यार्थो मान्त्रिकविद्वद्देशिकैकवेद्यः

कांपृ' इत्येकादशभिरक्षरैर्भाष्यकारैरुक्ता । तेषु च प्रकृतं नामारभ्य पञ्चकोशान्तरस्थितेत्यन्तानि चतुर्दश नामानि प्रतिपाद्यन्ते । पवर्गीयाद्यक्षरकाद्यक्षरनामभ्यां संपुटीकृतानि द्वादश नामानीत्यर्थः । प्रकृतनामभ्यन्तरप्रश्लेषे तु नवाक्षरत्वं स्वरादित्वं च स्यादिति तादृशेन संपुटीकरणाभावाद्भवति मूलविरोधः । सूत्राणामपि दृष्टोपायनिबन्धनमात्ररूपत्वेन तदुक्तोपायगम्भीरतायामनाशङ्कायामालोचने तु सोऽपि पक्षः साधुरेव । एवमन्यत्रापि द्रष्टव्यम् ।। १३० ।।

**चिच्छक्तिश्चेतनारूपा जडशक्तिर्जडात्मिका ।**
**गायत्री व्याहृतिः संध्या द्विजवृन्दनिषेविता ।। १३१ ।।**

**चिच्छक्तिरिति**—चिच्छक्तिरौपम्यशक्तिः । 'चिदित्युपमाया' मिति यास्कस्मृतेः । 'चिदिति चोपमार्थे प्रयुज्यमानः' इति पाणिनिस्मरणाच्च ।

> द्वे अक्षरे ब्रह्मपरे त्वनन्ते विद्याविद्ये निहिते यत्र गूढे ।
> क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः ।।

इति श्वेताश्वतरनिर्दिष्टं विद्यापदेनोच्यते । अविद्यानिवारकत्वरूपं सामर्थ्यं चैतन्यापरपर्यायं वा चिच्छक्तिः । देवीभागवते पञ्चमस्कन्धे—

> वर्तते सर्वभूतेषु शक्तिः सर्वात्मना नृप ।
> शववच्छक्तिहीनस्तु प्राणी भवति सर्वथा ।।
> चिच्छक्तिः सर्वभूतेषु रूपं तस्यास्तदेव हि ।।

इति । तदेवाह चेतनारूपा । 'चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते' इति संक्षेपशारीरकाचार्याः । 'चैतन्यस्वरूपा शक्तिः' इति गौडपादीयसूत्रं च । देवीभागवते प्राथमिकश्लोकेऽपि—

> सर्वचैतन्यरूपां तामाद्यां विद्यां च धीमहि ।
> बुद्धिं या नः प्रचोदयात् ।।

इति । इयं च त्रिवरणा गायत्री । अत एव भाष्ये 'गायत्र्या च समारम्भस्तद्वै भागवतं विदु' रिति । 'सैषानन्दस्य मीमांसा भवती' ति श्रुतिरपि । आनन्दस्य ब्रह्मणः सैषा चिद्रूपा शक्तिर्मीमांसा भवति विमर्शात्मिका भवतीति शंकरारण्यचरणैर्विद्यारत्ने व्याख्यानदर्शनात् ।

**जडशक्तिरिति**—स्रष्टव्यजगदात्मकशक्त्यप्रतियोगिको मायापरिणामविशेषो जडशक्तिः । सृज्यशक्तिमात्रोपलक्षणमेतत् । उक्तं च विष्णुपुराणे—

> शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
> शतशो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ।।
> भवन्ति तपसां श्रेष्ठ पावकस्य यथोष्णता ।

> प्रधानकारणीभूता यतो वै सृज्यशक्तयः ।
> निमित्तमात्रं मुक्त्वैकं नान्यत्किंचिदपेक्षते ॥
>
> नीयते तपतां श्रेष्ठ स्वशक्त्या वस्तु वस्तुताम् ।

इति ।

**जडात्मिकेति**—जडं दृश्यमात्रमात्मा स्वरूपं यस्या मायायाः सा जडात्मिका ।

**गायत्रीति**—चतुर्विंशत्यक्षरं छन्दो गायत्री । 'गायत्री छन्दसामह'मिति **गीता** । 'गायत्री छन्दसामसी'ति कौर्मे देवीगीते च । यद्वा गायत्र्याख्या गोपकन्या ब्रह्मणः कनिष्ठपत्नी । तदुक्तं पद्मपुराणे पुष्करक्षेत्रे ब्रह्मणि यागं कुर्वति सति समाहूता सावित्री, लक्ष्म्यादिका अद्यापि नागतास्ताभिः सहागच्छामीत्युत्तरमदात् । तेन वचनेन कुपितो ब्रह्मा शक्रहस्तात्काञ्चिद्गोपकन्यामानाय्य विष्णुं प्रत्युक्तवानिति प्रकृत्य--

> तावद्ब्रह्मा हरिं प्राह यज्ञार्थं सत्वरं च नः ।
> दैवी चैषा महाभाग गायत्री नामतः प्रभो ॥
> एवमुक्ते तदा विष्णुर्ब्रह्माणं प्रोक्तवानिदम् ।
> तदेनामुद्वहस्वाद्य मया दत्तां तव प्रभो ॥
> गान्धर्वेण विवाहेन विकल्पं मा कृथाश्चिरम् ।
> गृहाण गोपकन्याया अस्याः पाणिमनाकुलम् ॥
> गान्धर्वेण ततो गोपीमुपयेमे पितामहः ।

इत्यादि । तेन तादृशगोपकन्यारूपेत्यर्थः । अथवा 'गायन्तं त्रायते यस्माद् गायत्री तेन कथ्यते' इति **गायत्रीकल्पे** भरद्वाजस्मृत्युक्तनिर्वचनाद्वेदमातरि प्रसिद्धो गायत्रीशब्दस्तदभेदादम्बाया अपि वाचकः । 'आतोऽनुपसर्गे क' इति कः । गौरादित्वान्ङीप् । तदुक्तं **पद्मपुराणे**—

> विशेषात्पुष्करे स्नात्वा जपेन्मां वेदमातरम् ।
> अष्टाक्षरा स्थिता चाहं जगद्व्याप्तं मया त्विदम् ॥

इति । **देवीपुराणे** तु 'गायनाद्गमनाद्वापि गायत्री त्रिदशार्चिते'त्युक्तम् । 'गायति च त्रायते चे'ति तु **छान्दोग्यम्** । 'गायत्री गायनात्मत्वा'दिति **महावासिष्ठरामायणं** च ।

**व्याहृतिरिति** — व्याहृतिर्व्याहरणमुच्चारणं तद्रूपा । मन्त्रविशेषरूपा वा । **वायुपुराणे** तु—

> मयाभिव्याहृतं यस्मात्त्वं चैव समुपस्थिता ।
> तेन व्याहृतिरित्येवं नाम ते सिद्धिमेष्यति ॥

इति निरुक्तम् ।

**सन्ध्येति**—आदित्यावच्छिन्नचैतन्यस्य स्वस्य चाभेदभावनं संध्यापदार्थः । सम्यग्ध्यायन्त्यस्यामिति व्युत्पत्तेश्च । तदुक्तं महाभारते—

> संध्येति सूर्यगं ब्रह्म संध्यानादविभागतः ।
> ब्रह्माद्यैः सकलैर्भूतैस्तदंशैः सच्चिदात्मनः ।।
> तस्य दासोऽहमस्मीति सोऽहमस्मीति या मतिः ।
> भवेदुपासकस्येति ह्येवं वेदविदो विदुः ।।

इति । तदभेदादियमपि संध्या । तथाच व्यासः —

> न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह ।
> साहमस्मीत्युपासीत विधिना येन केन चित् ।।

इति । भारद्वाजस्मृतावपि—

> ब्रह्माद्याकारभेदेन या भिन्ना कर्मसाक्षिणी ।
> भास्वतीश्वरशक्तिः सा संध्येत्यभिहिता बुधैः ।।

इति । 'गायत्री सशिरास्तुरीयसहिता संध्यामयीत्यागमैराख्याता त्रिपुरे त्वमेव महतां शर्मप्रदा कर्मणा' मित्यभियुक्तोक्तिरिति । अत एव संधिकालोपास्यदेवतापरोऽयं शब्द इति माधवः । सम्यग्ध्येयत्वात्संध्या । 'आतश्चोपसर्गे' इति 'कर्मण्य' णिति पारिजातकारः । इयं च ब्रह्मणो मानसपुत्री । तदुक्तं कालिकोपपुराणे—

> तदा तन्मनसो जाता चारुरूपा वराङ्गना ।
> नाम्ना संध्येति विख्याता सायंसंध्या जयन्तिका ।।
> ब्रह्मणो ध्यायतो यस्मात्सम्यग्जाता वराङ्गना ।
> अतः संध्येति लोकेऽस्मिन्नस्याः ख्यातिर्भविष्यति ।।

इति । भगवतीपुराणेऽपि—

> या सा संध्या ब्रह्मसुता मनोजाता पुराभवत् ।
> तपस्तप्त्वा तनुं त्यक्त्वा सैव भूता ह्यरुन्धति ।।

इति । रेणुकापुराणे तु—

> इडैकास्य महाकाली महालक्ष्मीस्तु पिङ्गला ।
> एकवीरा सुषुम्णेयमेवं संध्या त्रयात्मिका ।।

इत्युक्तम् । एकवर्षात्मककन्यारूपा वा 'एकवर्षा भवेत्संध्ये' ति कन्याप्रकरणे धौम्यवचनात् ।।

अथ परिभाषायां षट्त्रिंशत्पदानि विभजते ।
दिवि कूटहविले द्वे द्विद्विर्गोणां विभाति नवी ।
चत्वारो रुद्रफलं शंभुर्भोजो बली राजा ॥ १८ ॥

द्वे इति पञ्चाक्षरे । चत्वार इति द्व्यक्षराः शब्दाः एकाक्षिनार्थे 'अनिशिष्टेषु समं स्या' दिति न्यायेन तथैव पर्यवसानान्नकारस्य दशाक्षरं नामेत्यर्थः । स्पष्टमन्यत् ॥ १८ ॥

द्विजवृन्देति—द्विजवृन्दैस्त्रैवर्णिकसमूहैर्निषेवितोपास्या संध्यात्मकेन उक्तं च रेणुकापुराणे—

संध्यैका सर्वदा देवैर्द्विजैर्वन्द्या महात्मभिः ।
आसने शयने याने भोजने रेणुकैव हि ॥

इति । अथवा व्याहृत्यादिनामत्रयमवस्थात्रयपरम् । व्याहृतिर्वाग्व्यापारो जाग्रदवस्थोपलक्षकः । संध्याशब्दोऽवस्थयोः संधौ जात' इति व्युत्पत्त्या 'संध्ये सृष्टिराह ही' ति व्याससूत्रे प्रयोगाच्च स्वप्नपरः । अवस्थाविशेषत्वाभिप्रायेण तदवच्छिन्नदेव्यभिप्रायेण च स्त्रीलिङ्गः । द्विजाः पक्षिण इव द्विजा जीवास्तेषां वृन्देन नितरामभेदेन सेविता संवन्द्येति सुषुप्तिदशोक्तिः । यथा पक्षिणः संचारेण श्रान्ताः पक्षौ संकोच्य नीडे लीयन्ते तथा जीवा अपि श्रान्ता जागरस्वप्नौ संकोच्य परब्रह्मणि निलीयन्त इत्युक्तेः । यच्छ्रुतं बृहदारण्यके 'तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संलयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यती' ति । 'सता सोम्य तदा संपन्नो भवती' ति श्रुतेश्च । 'तदभावो नाडीषु तच्छ्रुतेरात्मनि चे' ति तार्तीयीकाधिकरणे तथा निर्णयाच्च ॥ १४१ ॥

तत्त्वासना तत्त्वमयी पञ्चकोशान्तरस्थिता ।
निःसीममहिमा नित्ययौवना मदशालिनी ॥ १४२ ॥

तत्त्वासनेति—शिवादिक्षित्यन्तानि षट्त्रिंशत्तत्त्वान्येवासनं योगपीठाख्यमासनं यस्याः । तत्त्वान्यस्यति क्षिपतीति वा ।

तदिति—तत्पदस्य बुद्धिविपरिवृत्तिविषये शक्तिः । भगवत्यपि सर्वेषां बुद्धौ विपरिवर्तत एवेति भवति तत्पदवाच्या । एवमेव चोक्तं 'यत्तत्पदमनुत्तम' मिति विष्णुसहस्रनामभाष्ये आचार्यभगवत्पादैः । ततश्च तत्र 'यदे नमः तदे नमः' इति केषांचिच्चतुर्थ्यन्तमन्त्रकल्पनं चिन्त्यं, यत्तत्पदशक्यतावच्छेदकापरित्यागेनैव ब्रह्माणि प्रवृत्तौ संज्ञात्वाभावेन सर्वनामत्वानपायात् । किंच तवर्गीयाक्षरचतुष्टयान्यतमान्तत्वेऽपि चर्त्वेन यत्तत्पदमिति संहितोपपत्तेर्दकारान्तमेवेति तयोः प्रातिपदिकयो-

र्दुरुपपादम् । तस्माद्यस्मै नमः तस्मै नमः इत्येव प्रयोगः । ब्रह्मविशेष्यकत्वाभिप्रायेण नपुंसकलिङ्गोपपत्तिः ।

त्वमिति —एकेनैव त्वंपदेनापि भगवती वाच्येति तुभ्यं नम इत्येव प्रयोगः । यथा तु तत्त्वमसीत्यत्रैव निर्गुणब्रह्मलक्षके तत्त्वंपदे तदापि सर्वनामतानपायादुक्तविध एव प्रयोगः । नहि संकुचितवृत्तिकमपि विश्वपदं विश्वेदेवा इत्यादौ सर्वनामतां जहाति ।

अयीति—अयीति कोमलामन्त्रणेऽव्ययम् । गौरादेराकृतिगणत्वात्ततो ङीपि स्त्रीमिदम् । जगन्मातृत्वाज्जनैरामन्त्रणीयेत्यर्थः । अयः शुभावहो विधिस्तद्रूपा वा । अयीति पदार्थस्यैतस्य वाचकं वाऽयीति पदम् । 'अयपय गतौ' विति धातुपाठेन गत्यर्थस्य तत्रैव पर्यवसानात् अय्यै नमः इति प्रयोगः । चरमशतकान्तर्गतेन नाम्ना पौनरुक्त्यपरिजिहीर्षयेयं व्याख्या युक्ततामित्युपपत्तिः । एवमन्यत्राप्यूह्यम् ।

**पञ्चकोशेति** पञ्चसंख्याकाः कोशाः पञ्चकोशा इति मध्यमपदलोपी समासः । ते च पञ्च पञ्चिकापूजने प्रसिद्धा मन्त्रविशेषाः । तदभेदात्तद्देवता अपि । ताश्च ज्ञानार्णवे—

> श्रीविद्या च परंज्योतिः परा निष्कलशांभवी ।
> अजपा मातृका चेति पञ्च कोशाः प्रकीर्तिता ॥

इति । एतासु पञ्चदेवतासु श्रीचक्रराजेऽर्च्यमानासु परंज्योतिराद्याश्चतस्रो देवता अपि तः सृष्ट्यादिचक्रेषु व्यष्टिसमष्टिभेदेन पूज्यन्ते । श्रीविद्या तु मध्ये बिन्दाविति स्थितिः । तेन पञ्चकोशानामन्तरे मध्ये स्थितेत्यर्थः । यद्वा सन्ति तावदस्मदादि-शरीरेष्वन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाख्या अन्तरन्तः कक्ष्याक्रमेण पञ्च-कोशपदवाच्याः पदार्थाः । एतेषां पञ्चानां मध्ये आन्तर आनन्दमयः कोशस्तत्रा-भेदेन स्थिता । आनन्दमयाधिकरणे वृत्तिकारैः 'अन्योऽन्तर आत्मानन्दमय' इत्या-दिश्रुतिष्वानन्दमयस्य ब्रह्मरूपतोक्तेः । आचार्यभगवत्पादैस्त्वानन्दमयस्य शोधनीयेषु गणनादशुद्धत्वे सिद्धे ब्रह्मता नोपपद्यत इत्याशयेन ब्रह्मपुच्छवाक्य एव ब्रह्मनिर्देशो व्यवस्थापितः । तत्पक्षे 'यदेष आकाश आनन्दो न स्या' दिति सामानाधिकरण्येन प्रयोगादानन्दमयकोशस्य पराकाशात्मकब्रह्मशरीरभूतचिच्छक्तिरूपत्वम् । श्रीकण्ठ-भाष्यतट्टीकादावयमर्थः स्पष्टः । पुच्छब्रह्मपक्षे तु पञ्चानामन्तरे मध्ये स्थितेत्यर्थः । युक्तं चैतत् । ब्रह्मगीतायां तथैवोपबृंहणदर्शनात् । तदुक्तं—

> तथानन्दमयश्चापि ब्रह्मणान्येन साक्षिणा ।
> सर्वोत्तरेण संपूर्णो ब्रह्म नान्येन केनचित् ॥

यदिदं ब्रह्मपुच्छाख्यं सत्यज्ञानाद्वयात्मकम् ।
सारसः सर्वदा साक्षान्नान्यथा सुरपुंगवाः ॥

इति । श्रीहभट्टारका अप्याहुः -

अन्नप्राणमनःप्रबोधपरमानन्दैः शिरःपक्षयुक्
पुच्छात्मप्रकटैर्महोपनिषदां वाक्यैः प्रसिद्धीकृतः ।
कोशैः पञ्चभिरेभिरेव भवतीमेतत्प्रलीनामिमि
ज्योतिःप्रज्वलदुज्ज्वलात्मचपलां यो वेद स ब्रह्मवित् ॥ इति ।

निस्सीमेति—निष्क्रान्तः सीमानं सीमां वा निःसीमा निःसीमो वा निरवधिको महिमा यस्याः । 'मनः' इति निषेधाच्च ङीप् । वैकल्पिको डाप् । अतो निःसीममहिम्ने नम इति वा निःसीममहिमायै नम इति वा प्रयोगः ।

नित्ययौवनेति—कालत्रयेऽपि रजसोऽविरहान्नित्ययौवना ।

मदशालिनीति—विषयान्तरसंपर्कशून्य आनन्दैकविषयको वृत्तिविशेषो मदस्तेन शालते शोभत इति तथा ॥ १४२ ॥

मदाघूर्णितरक्ताक्षी मदपाटलगण्डभूः ।
चन्दनद्रवदिग्धाङ्गी चाम्पेयकुसुमप्रिया ॥ १४३ ॥

मदेति—मदेन घूर्णितानि रक्तानि चाक्षीणि यस्याः । बाह्यविषयवैमुख्यं घूर्णनम् ।

मदपाटलेति—मदेन पाटले श्वेतरक्ते गण्डभुवौ कपोलभित्ती यस्याः । मदो मद्यं लक्षणया तत्पानम् । यद्वा मदः कस्तूरी । पाटलं पुष्पविशेषः । मत्वर्थीयोऽच् । तद्वत्यौ मकरिकाचित्रिते कर्णावतंसवत्यौ च गण्डभुवौ यस्याः ।

मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः ।
मद्येऽपि मद आख्यात ॥ इति विश्वः ।

चन्दनद्रवेति—चन्दनस्य मलयजस्य द्रवेण घृष्टसारेण दिग्धानि लिप्तान्यङ्गानि यस्याः ।

चाम्पेयेति—चाम्पेयकुसुमं नागकेसरपुष्पं, चम्पासंबन्धिपुष्पं वा प्रियं यस्याः ॥ १४३ ॥

कुशला कोमलाकारा कुरुकुल्ला कुलेश्वरी ।
कुलकुण्डालया कौलमार्गतत्परसेविता ॥ १४४ ॥

कुशलेति—सृष्ट्यादिनिर्माणकौशलवत्त्वात्कुशला । कुशं जलं लाति आदत्ते इति वा । आदन्तत्वात्कः । कुत्सितः शलश्चन्द्रमा यस्या अग्रे तदधिककान्तिमत्त्वादिति वा । 'शलं तु शल्लकीलोम्नि शलो भृङ्गीगणे विधा' विति विश्वः । कोमलः सुकुमार आकारोऽवयवविन्यासो यस्याः ।

कुरुकुल्लेति—कुरुकुल्लाख्यदेवी श्रीपुरेऽहंकारचित्तमयप्राकारयोर्मध्ये विमर्शमयवाप्यामाधिकृता । तदुक्तं ललितास्तवरत्ने वापीं प्रकृत्य—

कुरुविन्दतरणिनिलयां कुलाचलस्पर्धिकुचनमन्मध्याम् ।
कुङ्कुमविलिप्तगात्रीं कुरुकुल्लां मनसि कुर्महे सततम् ॥

इति तन्त्रराजे च द्वाविंशे पटले निरूपिता तद्रूपा ।

कुलेश्वरीति—सजातीयानां मातृमानमेयानां समूहः कुलं तस्येश्वरी ।

कुलकुण्डेति—मूलाधारकर्णिकामध्यगतो विन्दुः कुलकुण्डं कमलकन्दमध्यस्थितच्छिद्रतुल्यं तदेवालयः स्वापस्थानं यस्याः । तस्मिन्नासमन्ताल्लयः सुषुप्तिरिव यस्या इति वा । गा कुण्डलिनीति यावत् । तदुक्तमाचार्यभगवत्पादैः 'अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणी' ति ।

कौलेति — स्वस्ववंशपरंपराप्राप्तो मार्गः कुलसंबन्धित्वात्कौलः । तदुक्तं ब्रह्मखण्डे—

यस्य यस्य हि या देवी कुलमार्गेण संस्थिता ।
तेन तेन च सा पूज्या बलिगन्धानुलेपनैः ॥

इति । 'नैवेद्यैर्विविधैश्चैव पूजयेत्कुलमार्गत' इति च । यद्वा समयमतं कौलमतं मिश्रमतं चेति विद्योपास्तौ मतत्रयम् । शुकवसिष्ठादिसंहितापञ्चकोक्तं वैदिकमार्गकदम्बितमाद्यम् । चन्द्रकुलादितन्त्राष्टकोक्तं तु चरमम् । कुलसमयोभयानुसारित्वात् । एतद्भिन्नतन्त्रोदितं कौलमार्गम् । कौलैर्मृग्यत इत्यर्थे कर्मणि घञ् । तत्तदुपास्तिभेदोऽधिकारभेदश्च तत्तत्तन्त्रेष्वेव स्पष्टः । तस्मिंस्तत्परैरासक्तैः सेविता ॥ १४४ ॥

कुमारगणनाथाम्बा तुष्टिः पुष्टिर्मतिर्धृतिः ।
शान्तिः स्वस्तिमती कान्तिर्नन्दिनी विघ्ननाशिनी ॥ १४५ ॥

कुमारेति—कुमारः स्कन्दो गणनाथो गजाननस्तयोरम्बा माता । कुत्सितो मारगणः स्मरविकारसमूहो येषां तन्नाथानम्बते बध्नातीति वा । 'अबि बन्धन'

पुरुषो विष्णुरित्युक्तः शिवो वा नाम नामतः ।
अव्यक्तं तु उमादेवी श्रीर्वा पद्मनिभेक्षणा ॥
तत्संयोगादहंकारः स च सेनापतिर्गुहः ।

इति । तद्गणनाथानतीवाहन्ताधिष्ठानमस्य इति ।

**तुष्टिरिति**—तुष्टयादीनि सप्त नामानि तोषपोषज्ञानधैर्यशमकल्याण कमनीयतावाचकानि सन्ति तादृशभगवतीस्वरूपत्वाभिप्रायेण तामप्यभिद तथाच **मार्कण्डेयपुराणे**—

या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

इत्यादि **मल्लारिमाहात्म्येऽपि**—

यो देवः सर्वभूतेषु तोषरूपेण संस्थितः ।
नमस्तस्मै नमस्तस्मै नमस्तस्मै नमो नमः ॥

इत्यादि । **देवीभागवते** तृतीयस्कन्धे—

बुद्धिः कीर्तिर्धृतिर्लक्ष्मीः शक्तिः श्रद्धा मतिः स्मृतिः ।
सर्वेषां प्राणिनां साम्बा प्रत्यक्षं तन्निदर्शनम् ॥

इति । **पद्मपुराणे** देवीक्षेत्रगणनावसरे तुष्टिर्वस्त्रेश्वरे तथा ।

**पुष्टिरिति**—देवदारुवने पुष्टिः ।

**धृतिरिति**—धृतिः पिण्डारकक्षेत्रे इत्येवं तत्तत्क्षेत्राधिष्ठात्र्या भगवत्या त्युक्तम् ।

**मतिरिति**—मतिस्तु वायुपुराणे निरुच्यते—

बिभर्ति मानं मनुते विभागं मन्यतेऽपि च ।
पुरुषो भोगसंबद्धस्तेन चासौ मतिः स्मृता ॥

इति । तस्याश्च देवीरूपता **सूतसंहितायाम्**—

यानुभूतिरुदिता मतिः परा वेदमाननिरता शुभावहा ।
तामतीव सुखदां वयं शिवां केशवादिजनसेवितां नुमः ॥

इत्यादि ।

**शान्तिरिति**—शान्तिशब्देन वायवीयः कलाविशेषो वा कथ्यते । **शैवागमे**—

मज्जमायाविकारौघशान्तिः पुंसः पुनर्यया ।
सा कला शान्तिरित्युक्ता साधिकाराम्पदं पदम् ॥

इति । बृहत्पाराशरस्मृतावपि—

दशपञ्चाङ्गुलव्याप्तं नासिकाया बहिःस्थितम् ।
जीवो यत्र विशुध्येत सा कला षोडशी स्मृता ॥

इति प्रकृत्य 'सा च शान्तिः प्रकीर्तिते'त्यन्तम् ।

**स्वस्तिमतीति**—सुष्ठु अस्तिः सत्ता तद्वत्त्वेन वा स्वस्तिमती । सत्तायाः शोभनत्वं च पारमार्थिकत्वं व्यावहारिकसत्ताधिकत्वम् । 'प्राणा वै सत्यं तेषामेष सत्यं'। 'तत्सत्यस्य सत्य'मिति च श्रुतेः । 'स्वस्त्याशीःक्षेमनिष्पापपुण्यमङ्गलवाचक' इति रत्नकोशः । 'स्वस्तीत्यविनाशिनामे'ति यास्कश्च ।

**कान्तिरिति**—कान्तिशब्देनेच्छाशक्तिर्वोच्यते ।

**नन्दिनीति**—नन्दयितृत्वान्नन्दिनी कामधेनुवंशोद्भवगोविशेषो वा । गङ्गास्वरूपा वा ।

**विघ्ननाशिनीति**—विशेषेण घ्नन्तीति विघ्ना विद्यान्तरायास्तान्नाशयितुं शीलमस्यास्तथा ॥ १४५ ॥

**तेजोवती त्रिनयना लोलाक्षी कामरूपिणी ।**
**मालिनी हंसिनी माता मलयाचलवासिनी ॥ १४६ ॥**

**तेजोवतीति**—तेजसामादित्यादीनामाधारभूतत्वात्तेजोवती । 'एतस्मिन् खल्वक्षरे गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इति श्रुतेः ।

**त्रिनयनेति**—त्रीणि सोमसूर्याग्निरूपाणि नयनानि नेत्राणि यस्याः । क्षुभ्रादेराकृतिगणत्वात्संज्ञाशब्दत्वेऽपि णत्वाभावः । चौपडिति शब्दस्य त्रिनयनेति संज्ञा नामपारायणे प्रसिद्धा तद्रूपा वा । यद्वा नयनशब्दो लक्षणया प्रमाणपरः । नयति प्रापयति प्रमाणमिति व्युत्पत्तेश्च । तथाच शाण्डिल्यसूत्रे प्रयोगः 'त्रीण्येषां नेत्राणि शब्दलिङ्गाक्षभेदाद्रुद्रव'दिति । त्रीणि प्रत्यक्षानुमानशब्दरूपाणि प्रमाणानि यस्याः। यद्विषयकप्रमाजनने त्रिविधमेव प्रमाणम् । श्रवणरूपं शाब्दज्ञानम् । मननं यौक्तिकत्वादानुमानिकम् । निदिध्यासनं तु स्वानुभवरूपं प्रत्यक्षमेव । परंतु विजातीयप्रत्ययैः कदाचिन्मध्ये मध्येऽन्तरितम् । एतदभिप्रायेणैव शाण्डिल्यमुनिना शब्दमारभ्यैव प्रमाणानि गणितानि । उपमानस्य शक्तिग्रहमात्रविषयकत्वेन प्रकृतानुपयोगात् । अतएवोक्तं मनुस्मृतौ—

प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥

इति । सांख्यानां समाससूत्रमपि 'त्रिविधं प्रमाण'मिति । **योगसूत्रमपि** 'प्रत्यक्षानुमानागमाः प्रमाणानी'ति । त्रीन्मार्गान्प्रत्यधिकारिणो नयतीति वा । दक्षिणोत्तरमार्गौ ब्रह्ममार्गश्चेति त्रयो मार्गा उत्तरत्र विवेचयिष्यन्ते । तथा चोक्तं **देवीपुराणे**—

दक्षिणं चोत्तरं लोकं तथा ब्रह्मायनं परम् ।
नयं सन्मार्गवर्गं च नेत्री त्रिनयना मता ॥

इति ।

**लोलाक्षीति**—लोलाक्षीणां स्त्रीणां यः कामो मन्मथस्तद्रूपिणी । शिवकामनिरासाय लोलाक्षीसंबन्धित्वं कामविशेषणम् । कामाभिमानियोगेश्वरीरूपा वा । तदुक्तं **वराहपुराणे**—

कामः क्रोधस्तथा लोभो मदो मोहश्च पञ्चमः ।
मात्सर्यं षष्ठमित्याहुः पैशुन्यं सप्तमं तथा ॥
असूया त्वष्टमी ज्ञेया इत्येता अष्ट मातरः ।
कामं योगेश्वरीं विद्धि क्रोधं माहेश्वरीं तथा ॥
लोभस्तु वैष्णवी प्रोक्ता ब्रह्माणी मद एव च ।
मोहः स्वयंभूः कल्याणी मात्सर्यं चेन्द्रजां विदुः ॥
यमदण्डधरा देवी पैशुन्यं स्वयमेव च ।
असूया च वराहाख्या इत्येताः परिकीर्तिताः ॥

इति ।

**मालिनीति**—मालावत्त्वान्मालिनी । ब्राह्म्यादित्वादिनः एकपञ्चाशन्मातृकाभिमानिदेवताया मालिनीति संज्ञा तद्रूपा वा । यद्वा अस्ति देव्याः सखी मालिनी नाम्नी तद्रूपा । तदुक्तं **वामनपुराणे** पार्वतीविवाहप्रकरणे सप्तपदीक्रमणं प्रकृत्य—

ततो हराङ्घ्रिर्मालिन्या गृहीतो दायकारणात् ।
किं याचसे ददाम्येष मुञ्चस्वेति हरोऽब्रवीत् ॥
मालिनी शंकरं प्राह मत्सख्यै देहि शंकर ।
सौभाग्यं निजगोत्रीयं ततो मोक्षमवाप्स्यसि ॥
अथोवाच महादेवो दत्तं मालिनि मुञ्च माम् ।

इत्यादि । वृत्तविशेषरूपा मन्दाकिनीरूपा वा ।

मालिनी वृत्तभेदे स्यान्मालाकारस्त्रियामपि ।
चम्पानगर्यां गौर्यां च मन्दाकिन्यां च मालिनी ॥

इति विश्वः । सप्तवर्षा कन्या मालिनीत्युच्यते तद्रूपा वा । 'सप्तभिर्मालिनी मा स्यादि' ति कन्याप्रकरणे धौम्यवचनात् ।

हंसिनीति —हंसा यतिविशेषा अस्यामभेदेन सन्तीति हंसिनी । हंस इत्यजपा मन्त्रो वा ।

मातेति —सर्वजनयितृत्वान्माता । मातृकारूपा वा । 'मन्त्राणां मातृभूता च मातृका परमेश्वरी' ति स्कान्दात् । प्रमात्रर्थकं पुंलिङ्गं वा । प्रकाशोऽत्र विशेष्यः । अथवा दशमीतिथिनित्यामन्त्रस्य मातेति संज्ञा । नामपारायणे तथा दर्शनात् । तद्रूपेत्यर्थः । कायावरोहणाख्यक्षेत्राधिष्ठात्रीयम् । 'माता कायावरोहण' इति पाद्मात् । लक्ष्मीबीजस्यापि मातेति संज्ञा । 'श्रीर्मा रमा च कमला माता लक्ष्मीश्च मङ्गले' ति विश्वाख्योक्तेः ।

मलयाचलेति—शाबरचिन्तामणौ प्रसिद्धा मलयालया भगवती तद्रूपत्वान्मलयाचले वसतीति तथा ॥ १४६ ॥

अथ परिभाषायां पञ्चत्रिंशन्नामानि विभजते ॥

गलफफशोभावेगः शंभोर्वेदे चतुर्होत्र ।
भूद्विस्ताव्राजको मोदाङ्गणयासतो नतिहृत ॥ १९ ॥

अत्र स्ताद्राजेत्यनेनार्धसमाप्त्युत्तरमेकपदेनैक नामेत्येतावन्मात्रोक्तावपि परश्च मोदाङ्गणेति पञ्चाक्षरनामकीर्तनबलात्प्रथमस्यैक दशाक्षरात्मत्वलाभो न्यायगम्यः । तावत एव परिशेषात् । चरमनकारस्य सकारयोगाभावान्नाक्षरसंख्यापरता ॥ १९ ॥

सुमुखी नलिनी सुभ्रूः शोभना सुरनायिका ।
कालकण्ठी कान्तिमती क्षोभिणी सूक्ष्मरूपिणी ॥ १४७ ॥

सुमुखीति—शोभनं मुखं यस्याः सा सुमुखी । ज्ञानेन मुखकान्तेराधिक्यात् । 'शोभतेऽस्य मुख य एवं वेदे' ति श्रुतेः । 'ब्रह्मविद इव ते सौम्य मुखमाभाती' ति श्रुतेश्च । षोडश्यङ्गत्वेनोपास्यदेवताविशेषो वा सुमुखी ।

नलिनीति—करचरणमुखनेत्राद्यवयवानां कमलरूपत्वात्सृष्टिन्यायेन नलिनी । भागीरथीरूपत्वाद्वा । 'नन्दिनी नलिनी सीते' ति नदीगङ्गादशनामसु गणनात् । नलाख्यो राजा यस्यामुपासनया तादात्म्येन निविष्टः सेति वा ।

सुभ्रूरिति— शोभने भ्रुवौ यस्याः सा सुभ्रूः ।

शोभनेति—सौन्दर्यशीलत्वाच्छोभना । 'सुषमं साधु शोभन' मिति कोशः ।

सुरनायिकेति—सुराणां नायिकेश्वरी 'महत्तरा महिमा देवताना' मिति

**कालकण्ठीति**—कालः कण्ठो यस्येश्वरस्य तस्य स्त्री। उक्तं च **वायुपुराणे**—

> पश्यतां देवसंघानां पिशाचोरगरक्षसाम् ।
> धृतं कण्ठे विषं घोरं कालकण्ठस्ततोऽस्म्यहम् ।।

इति **देवीपुराणे**ऽष्टषष्टिशिवतीर्थप्रकरणे 'कालञ्जरे कालकण्ठः' इति **स्मर्यते** । तेन तत्क्षेत्राधिष्ठात्रीत्यर्थः । मधुरोऽस्फुटो ध्वनिः कलः स एव कालः स्वार्थिकोऽण् । कालः कण्ठो यस्या इति वा । अङ्गगात्रकण्ठेभ्यो वा ङीप् । दारुकासुरवधार्थं ससर्ज कालीं कामारिः कालकण्ठी कपर्दिनी 'मिति **लैङ्गे** कथायाः प्रसिद्धेस्तद्रूपा वा । कलपदादेव स्वार्थिकोऽण्वा । मञ्जुध्वनिरिति तदर्थः ।

**कान्तिमतीति**—कान्तिरस्या अस्तीति कान्तिमती ।

**क्षोभिणीति**—परमेश्वरी सृष्टयौन्मुख्येन क्षोभयतीति क्षोभिणी । तदुक्त **विष्णुपुराणे**

> प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः ।
> क्षोभयामास भगवान्सर्गकाले व्ययाश्रितः ।।

इति । यद्वा । मनःक्षोभात्कांश्चिद्गणानजनयदिति क्षोभिणी । तदुक्तं **वराहपुराणे** मूर्तित्रयं प्रकृत्य—

> या मन्दरं गता देवी तपस्तप्तुं तु वैष्णवी ।
> तस्यास्तपन्त्याः कालेन महतः क्षुभितं मनः ।।
> तस्मात्क्षोभात्समुत्तस्थुः कुमार्यः सौम्यदर्शनाः ।
> नीलकुञ्चितकेशान्ता बिम्बोष्ठ्यः पद्मलोचनाः ।।
> इन्दीवरसमा दामनूपुराढ्याः सुवर्चसः ।
> एवंविधाः स्त्रियो देव्याः क्षोभिते मनसि द्रुतम् ।।
> उत्तस्थुः शतसहस्राः कोटिशो विविधाननाः ।

इत्यादि ।

**सूक्ष्मरूपिणीति**—सूक्ष्मं दुर्ज्ञेयं रूपमस्याः । 'सूक्ष्मात्सूक्ष्मतरं नित्यम्' 'अणोरणीया'निति च श्रुतेः । सूक्ष्म इति होमविशेषस्य संज्ञा । **तन्त्रराजे** 'नित्यानित्योदिते मूलाधारमध्येऽस्ति पावक' इत्यादिना 'एवं द्वादशधा होममक्षरैः स्यादुदीरितं' रित्यन्तेन ग्रन्थेनोक्ता तदेव रूपमस्या इति वा । देव्या अपि त्रीणि रूपाणि स्थूलसूक्ष्मपरभेदात्सन्त्येवेति व्यक्तमेव ।। १४७ ।।

> **वज्रेश्वरी वामदेवी वयोवस्थाविवर्जिता ।**
> **सिद्धेश्वरी सिद्धविद्या सिद्धमाता यशस्विनी ।। १४८ ।।**

**वज्रेश्वरीति**—षष्ठीतिथिनित्या जालन्धरपीठाधिष्ठात्री वज्रेश्वरी । अथवा श्रीपुरस्य द्वादशः प्राकारो वज्रमणिमयस्तस्यैकादशस्य मध्ये वज्राख्या नदी तदधिपतिः । उक्तं च **दुर्वाससा**—

> तत्र सदा प्रवहन्ती तटिनी वज्राभिधा चिरं जीयात् ।
> चटुलोर्मिझाटनृत्यत्कलहंसीकुलकलक्वणितपुष्टा ।।
> रोधसि तस्या रुचिरे वज्रेशी जयति वज्रभूषाढ्या ।
> वज्रप्रदानतोषितवज्रिमुखत्रिदशविनुतचारित्रा ।।

इति । इन्द्राय वज्रोऽपि देव्यैव दत्तः । तदुक्तं **ब्रह्माण्डे** शक्रस्य जले तपःप्रकृत्य

> तज्जलादुत्थिता देवी वज्रं दत्वा बलिद्विषे ।
> पुनरन्तर्दधे सोऽपि कृतार्थः स्वर्गमेयिवान् ।

**वामदेवीति**— वामो वननीयो[1] देवो वामदेवः । 'तं देवा अब्रुवन्नयं वै नः *सर्वेषां वाम इति तस्माद्वामदेव*' इत्यैतरेयश्रुतेः । वामेन भागेन दीव्यतीत्यर्धनारीश्वरो वा वामदेवः ।

> कुङ्कुमक्षोदसंकाशं वामाख्यं वनवेषधृत् ।
> वक्त्रमुत्तरमीशस्य प्रतिष्ठायां प्रतिष्ठितम् ।।

इति **शिवपुराणोक्तः** सदाशिवव्यूहान्तर्गतो मूर्तिविशेषोऽपि वामदेवस्तस्येयं वामा सुन्दरी च सा देवी वा । वामानां कर्मफलानां वा देवी अधिष्ठानदेवता । वामाचारे रता वामाः । 'पूजकोऽपि भवेद्वामस्तन्मार्गे सततं रत' इति **कालिकापुराणवचनात्** तेषां देवीति वा । उक्तंच **देवीपुराणे**—

> वामं विरुद्धरूपं तु विपरीतं च गीयते ।
> वामेन सुखदा देवी वामदेवी ततः स्मृता ।।

इति ।

**वयोवस्थेति**—बाल्यपौगण्डकैशोरादिवयोविशेषाणामवस्थाभिर्विवर्जिता । सदा तनत्वात् ।

**सिद्धेश्वरीति**—गोरक्षप्रमुखानां सिद्धानामीश्वरी स्वामिनी एतन्नाम्नैव काश्यां प्रसिद्धा ।

**सिद्धविद्येति**--सिद्धा च सा विद्या च सिद्धविद्या । अत एव पञ्चदश्याः सिद्धारिचक्रशोधो नास्तीत्युक्तं **कादिमते** 'नित्यानां सिद्धमन्त्रत्वान्नावेक्ष्यास्त्वंशकादय' इति ।

सिद्धमातेति—सिद्धानां माता । रक्षकत्वात् ।

यशस्विनीति—यशोऽस्यां अस्तीति यशस्विनी । 'अस्मायामेधास्रजो विनिः' । 'तस्य नाम महद्यशः' इति श्रुतेः ॥ १४८ ॥

**विशुद्धिचक्रनिलयाऽऽरक्तवर्णा त्रिलोचना ।**
**खट्वाङ्गादिप्रहरणा वदनैकसमन्विता ॥ १४९ ॥**

**विशुद्धीति**—अथ द्विषष्टिनामभिर्योगिनीन्यासक्रमेण विशुध्द्यादिसप्तचक्राधिष्ठातृडरलकसहयाद्ययोगिनीसप्तकस्वरूपेण भगवतीं स्तोतुमारभते ।— **विशुद्धीत्यादिना** । तत्रेदं डाकिनिध्यानं—

ग्रीवाकूपे विशुद्धौ नृपदलकमले श्वेतरक्तां त्रिनेत्रां
　हस्तैः खट्वाङ्गखड्गौ त्रिशिखमपि महाचर्म संधारयन्तीम् ।
वक्त्रेणैकेन युक्तां पशुजनभयदां पायसान्नैकसक्तां
　त्वक्स्थां वन्देऽमृताद्यैः परिवृतवपुषं डाकिनीं वीरवन्द्याम् ॥

इति विशुद्धिचक्रं षोडशदलकमलस्य कर्णिकैव निलयो यस्याः ।

**आरक्तवर्णेति**—आरक्तो वर्णो यस्या इति पञ्चाक्षरं नाम । आङीषदर्थे । तेन 'श्वेतरक्तस्तु पाटल' इत्युक्तलक्षणकपाटलीकुसुमसमानवर्णेत्यर्थः । लाकिनीप्रकरणगतनाम्ना पौनरुक्त्यभावाच्च । त्रीणि लोचनानि यस्याः ।

**खट्वाङ्गेति**—खट्वाङ्गं खट्वापादः । दण्डारोपितनरकपालं वा । तदादि येषां चतुर्णां मध्ये तानि प्रहरणान्यायुधानि यस्याः ।

**वदनेति**—वदनं च तदेकं च । 'पूर्वकालैके'ति समासः । अनित्यत्वान्न पूर्वनिपातः । तेन समन्विता युक्ता ॥ १४९ ॥

**पायसान्नप्रिया त्वक्स्था पशुलोकभयंकरी ।**
**अमृतादिमहाशक्तिसंवृता डाकिनीश्वरी ॥ १५० ॥**

**पायसान्नेति**—पयोविकारः पायसश्च तदन्नं च तत्परमान्नं प्रियं यस्याः ।

**त्वक्स्थेति**—त्वचि धातौ तिष्ठतीति त्वक्स्था । तदभिमानित्वात् ।

**पशुलोकेति**—अद्वैतविद्याविहीनाः पशवस्त एव लोकास्तेषां भयंकरी । 'योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशु'रिति श्रुतेः । 'द्वितीयाद्वै भयं भवति' 'य एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवती'ति च श्रुतेः ।

**अमृतेति**—अमृताख्या शक्तिरादिर्यासां ताभिः षोडशभिर्महाशक्तिभिः 'अमृताकर्षिणीन्द्राणी' त्याभिरक्षरान्ताभिरेकैकदलनिष्ठाभिः संवृता । उक्तं च **स्वच्छन्दतन्त्रे**

तस्मादेकाङ्गुलादूर्ध्वं विशुद्धं षोडशाक्षरम् ।
मध्यगा डाकिनी बाह्यपत्रेषु परमेश्वरी ।।
अमृताद्यक्षरान्ताः स्युश्चन्द्रबिम्बं तदूर्ध्वत ।

इति । नवानां विशेषणानां विशेष्यं नाम्ना निर्दिशति—**डाकिनीश** डाकिन्याख्येश्वरीत्यर्थः ।। १५० ।।

**अनाहताब्जनिलया श्यामाभा वदनद्वया ।**
**दंष्ट्रोज्ज्वलाक्षमालादिधरा रुधिरसंस्थिता ।। १५१ ।।**

**अनाहतेति**—हृदये द्वादशदलकमलेऽनाहताख्यचक्रे राकिन्याख्या तिष्ठति । तस्या ध्यानं यथा—

हृत्पद्मे भानुपत्रे द्विवदनलसितां दंष्ट्रिणीं श्यामवर्णा
मक्षं शूलं कपालं डमरुमपि भुजैर्धारयन्तीं त्रिनेत्राम् ।
रक्तस्थां कालरात्रिप्रभृतिपरिवृतां स्निग्धभक्तैकसक्तां
श्रीमद्वीरेन्द्रवन्द्यामभिमतफलदां राकिनीं भावयामः ।।

इति । अनाहताब्जं तत्कर्णिका निलयो यस्याः ।

**श्यामाभेति**—श्यामा षोडशवार्षिकी तया तुल्या श्यामाभा । श्या कान्तिर्यस्या इति वा ।

**वदनद्वयेति** वदनयोर्द्वयं यस्याः ।

**दंष्ट्रोज्ज्वलेति** दंष्ट्राभिर्वराहममानदन्तैरुज्ज्वला शोभमाना ।

**अक्षमालेति**—अक्षमाला आदिर्येषां तेषां चतुर्णामायुधानां धरा । ‹ कर्मण्यणि धारेति स्यात् । उक्तश्लोके यदि चक्रं शूलमित्येव पाठस्त रथाङ्गस्य मां शोभां लाति आदत्त इत्यक्षमालं चक्रमित्याख्येयम् ।

**रुधिरसंस्थितेति**—रुधिरे शोणिते संस्थिता तदभिमानित्वेन ।। १५

**कालरात्र्यादिशक्त्यौघवृता स्निग्धौदनप्रिया ।**
**महावीरेन्द्रवरदा राकिण्यम्बास्वरूपिणी ।। १५२ ।।**

**कालरात्रीति**—अस्ति कालरात्र्याख्या काचन शक्तिः । तदुक्तं **च** मूर्तित्रयं प्रकृत्य—

या सा नीलगिरिं याता तपसे धृतमानसा ।
रौद्री तमोभवा शक्तिस्तस्याः शृणु धरे व्रतम् ।।

रौद्री तपोरता देवी तामसी शक्तिरुत्तमा ।
संहारकारिणी नाम्ना कालरात्रीति तां विदुः ॥

इति । सा आदिर्यासां तासां ठकारान्तद्वादशशक्तीनामोघेन समूहेन वृता पत्रेषु वेष्टिता ।

**स्निग्धोदनेति**—स्निग्धो घृतप्लुत ओदनः प्रियो यस्याः ।

**महावीरेति**—विविधा ईरा वा इरा वा येषां ते वीराः । पक्षद्वयेऽपि चमत्कृतवाणीकाः । स्नातका इति यावत् । अथवा महावीरं सौमिकः पात्रविशेषः । 'महावीरं तु विबाधमृजीष' मित्यादिश्रुतिप्रसिद्धः । लक्षणया च पानपात्रपरः । तस्मान्मत्वर्थीयोऽच् । ब्रह्मरसामृतपानशीला इति यावत् । अत एवेन्द्रा ब्रह्मविदः । इदमित्यापरोक्ष्येण ये साक्षिणः स्वात्मभूतं ब्रह्माहमस्मीति साक्षात्कुर्वन्ति ते इन्द्राः । तथा च श्रूयते 'इदमदर्शमिदमदर्शमिति तस्मादिन्द्रो नामे' ति । अथवा 'त्रितयाभोक्ता वीरेश' इति शिवसूत्रोक्तलक्षणा जागराद्यवस्थात्रयेऽपि तुर्यानुसंधानपरा वीरेन्द्राः । उक्तं च वरदराजेन—

वीरेश इति वीराणां भेदव्यसनकारिणाम् ।
अन्तर्बहिर्विसरतामिन्द्रियाणामधीश्वरः ॥

इति । अथवा महावीरः प्रह्लादः इन्द्रः शक्रश्च । **देवीभागवते** चतुर्थस्कन्धे शक्रप्रह्लादयोर्दिव्यवर्षशतं युद्धे जाते पश्चादुभाभ्यां स्तुता भगवती द्वयोरपि वरमदादिति कथानकस्मरणात् तेभ्यो वरं ददातीति तथा ॥

**अथ परिभाषायामेकोनचत्वारिंशन्नामानि विभजते ॥**

**पञ्चपदी भाविचतुष्पदी द्विचरणीव शंभोर्वाक् ।**
**चतुरङ्घ्रिवशे पञ्चाङ्घ्रिभवे द्वैकं चतुष्पदं च मम ॥ २० ॥**

षट्पदीति वक्तव्ये चतुर्णां द्वयोश्च विभज्योक्तिश्छन्दःपूरणाय । एकपदेन द्वादशाक्षरमेकं नाम । अर्धं तावत एव परिशेषात् ॥ २० ॥

**राकिण्यम्बेति**—राकिणीनामिकाया अम्बायाः स्वरूपमस्याः ॥ १५२ ॥

**मणिपूराब्जनिलया वदनत्रयसंयुता ।**
**वज्रादिकायुधोपेता डामर्यादिभिरावृता ॥ १५३ ॥**

**मणिपूरेति**—मणिपूराख्यं दशदलं नाभौ पद्मं तत्र लाकिन्याख्या योगिनी तिष्ठति । तदुक्तं—

दिक्पत्रे नाभिपद्मे त्रिवदनविलसद्दंष्ट्रिणीं रक्तवर्णां
शक्तिं दंभोलिदण्डावभयमपि भुजैर्धारयन्तीं महोग्राम् ।
डामर्याद्यैः परीतां पशुजनभयदां मांसधात्वेकनिष्ठां
गौडान्नासक्तचित्तां सकलसुखकरीं लाकिनीं भावयामः ॥

त्रिविष्टपसौभाग्यमयीं भुक्तिमुक्तिप्रदामुमाम् ।
आराध्य सुभगां भक्तया नारीं वा किं न विन्दती ।।

इति । अत्र पूर्वं विशेषणद्वयं सुभगापदस्य निरुक्तिमपि ध्वनयति ।

**त्र्यम्बकेति**—त्रीण्यम्बकानि नेत्राणि यस्याः । तदुक्तं देवीपुराणे निर्वचनाध्याये—

सोमसूर्यानलास्त्रीणि यन्नेत्राण्यम्बकानि सा ।
तेन देवी त्र्यम्बकेति मुनिभिः परिकीर्तिता ।

इति । 'प्रत्ययस्थात्कात्पूर्वस्ये' त्युपान्त्य इकारो न भवति आपः सुपः परत्वात् । त्रयाणां ब्रह्मविष्णुरुद्राणामम्बिका माता वा 'अभाषितपुंस्काच्चे' तीत्वाभावः ।

**त्रिगुणेति**— अत एवाह त्रिगुणात्मिका सत्वरजस्तमोरूपगुणत्रयसाम्यविग्रहा ।। १९७ ।।

**स्वर्गापवर्गदा शुद्धा जपापुष्पनिभाकृतिः ।**
**ओजोवती द्युतिधरा यज्ञरूपा प्रियव्रता ।। १९८ ।।**

**स्वर्गेति**—यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम् ।।

इति श्रुतिप्रसिद्धं क्षयिष्णु सुखं वर्गः[1] । नित्यं तु सुखमपवर्गः । तदुभयं दत्ते ।

**शुद्धेति**—शुद्धा आविद्यकमालिन्यशून्या ।

**जपापुष्पेति**—जपापुष्पनिभा ओण्ड्रपुष्पेण[2] तुल्या आकृतिः स्वरूपं यस्याः । 'आकृतिः कथिता रूपे सामान्यवपुषोरपी' ति विश्वः । अत्राकारप्रश्लेषेणाऽजपेति-पृथक् पदं स्वीकृत्य धराधरसुतेत्येकं पदमित्यपि सुवचम् । तत्र अजपामन्त्रविशेष-रूपा । तन्निर्वचनं च दक्षिणामूर्तिसंहितायाम्—

विना जपेन देवेशि जपो भवति मन्त्रिणः ।
अजपेयं ततः प्रोक्ता भवपाशनिकृन्तना ।।

इति ।

पुष्पं विकास आर्तवे ।
धनदस्य विमाने च कुसुमे नेत्ररुज्यपा ।।

इति हैमकोशः । तत्तुल्याकृतिर्यस्या इत्यर्थः ।

---

1. स्वर्गः 2. उड्रपुष्पेण

**ओजोवतीति**—'ओजोऽष्टमो धातु' रिति वेदभाष्ये । इन्द्रियसामर्थ्यमित

> ओजस्तेजसि धातूनामवष्टम्भप्रकाशयोः ।
> ओजो बले च दीप्तौ च ॥

इति तु विश्वः । तान्यस्यां सन्तीत्योजोवती ।

**द्युतिधरेति**—धरतीति धरा पचाद्यच् । द्युतेः कान्तेर्धरा ।

**यज्ञरूपेति**—'यज्ञो वै विष्णु' रिति श्रुतेः तदभिन्ना देवी यज्ञरूपा । एव वा रूपमस्याः । तदुक्तं हरिवंशपद्मपुराणयोरीश्वरं प्रक्रम्य—

> वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः ।
> अग्निजिह्वो धर्मरोमा ब्रह्मशीर्षो महातपाः ॥
> अहोरात्रेक्षणो दिव्यो वेदान्तश्रुतिभूषणः ।
> स्रुवतुण्डश्चाज्यनासः सामघोषस्वनो महान् ॥
> धर्मसत्यमयः श्रीमान्क्रमविक्रमसत्क्रियः ।
> प्रायश्चित्तनखो धीरः पशुजानुर्महाभुजः ॥
> औद्गात्रान्त्रो होमलिङ्गः फलबीजमहौषधिः ।
> वाय्वन्तरात्मा मन्त्रस्फिग्विकृतः सोमशोणितः ॥
> वेदीस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् ।
> प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरर्चितः ॥
> दक्षिणाहृदयो योगी महामन्त्रमयो महान् ।
> उपाकर्मोऽष्टचिबुकः प्रगर्ग्यावर्तभूषणः ॥
> नानाच्छन्दोगतिपथो गुह्योपनिषदासनः ।
> छायापत्नीसहायो वै मेरुश्रृङ्ग इवोच्छ्रितः ॥

इति । यद्वा —

> इन्द्रियद्वारसंगृह्यैर्गन्धाद्यैरात्मदेवताम् ।
> स्वभावेन समाराध्य ज्ञातुः सोऽयं महामखः ॥

इति मुख्याम्नायरहस्योक्तयज्ञाभिन्ना ।

**प्रियव्रतेति**—प्रियाणि व्रतान्यविशेषात्सर्वदेवताविषयकाणि यस्याः । भविष्योत्तरपुराणे—

> देवं देवीं च वोद्दिश्य यत्करोति व्रतं नरः ।

न भेदस्तत्र मन्तव्यः शिवशक्तिमयं जगत् ।

इति । प्रियव्रताख्यराजस्वरूपा वा ॥ १९८ ॥

दुराराध्या दुराधर्षा पाटलीकुसुमप्रिया ।
महती मेरुनिलया मन्दारकुसुमप्रिया ॥ १९९ ॥

दुराराध्येति—चपलेन्द्रियाणां दुःखेनाराधितुं अशक्या । अशक्येत्येव पर्यवसानम् ।

दुराधर्षेति—तदुक्तं 'तरलकरणानामसुलभे' ति । दुःखरूप आधर्षः स्वायत्तीकरणं यस्याः ।

पाटलीति—श्वेतरक्तवर्णं पाटलीनामकं कुसुमं प्रियं यस्याः । उक्तं च पाद्मे 'श्रीवृक्षे शंकरो देवः पाटलायां तु पार्वती' ति ।

महतीति—परममहत्परिमाणत्वात् । 'महती महान्कस्मान्मानेनान्याञ्जहतीति शाकपूणिर्महनीयो भवतीतिवे' ति तु यास्कनिरुक्तिः । नारदमुनेर्वीणाविशेषोपि महती तत्स्वरूपा वा ।

मेरुनिलयेति—मेरुरेव निलयो यस्याः । तन्त्रराजेऽष्टाविंशे पटले 'अथ षोडशनित्यानां लोकात्मत्वं वदामि ते' इत्युपक्रम्य ससागरद्वीपां भुवं वर्णयित्वोक्तम्—

मध्यस्थमेरौ ललिता सर्वदास्ते महाद्युतिः ।
तस्यामिता जलाब्ध्यन्तः शेषास्ताः स्युश्चतुर्दश ॥
तद्बहिः परमे व्योम्नि त्वन्ते चित्रा तु संस्थिता ।

इत्यादिना बहवो विशेषा उक्तास्ते गुरुमुखादेवावगन्तव्याः । यद्वा । चक्रराजस्य त्रयः प्रस्ताराः भूमिकैलासमेरुभेदात् । तत्र वशिन्याद्यष्टकेन सह भेदभावना भूप्रस्तारः । मातृकाक्षरैश्चेत्कैलासप्रस्तारः । षोडशभिर्नित्याभिश्चेन्मेरुप्रस्तारः । मेरुनित्यतादात्म्यभावनैव निलयो यस्या इत्यर्थः । भावनाप्रकारश्च सनत्कुमार-सनन्दनवसिष्ठसंहितासु त्रिषु त्रिविधः क्रमेण प्रतिपादितः ॥ अथवा

भूमिश्चन्द्रः शिवो माया शक्तिः कृष्णध्वमादनौ (?) ।
अर्धचन्द्रश्च बिन्दुश्च नवार्णो मेरुरुच्यते ॥

इति । ज्ञानार्णवे उद्धृतो नवाक्षरो मन्त्रो मेरुपदवाच्यः स एव निलयः सर्वमन्त्रोद्भव-स्थानं यस्याः । तदप्युक्तं महात्रिपुरसुन्दर्यां 'मन्त्रा मेरुसमुद्भवा' इत्यादि ।

मन्दारेति—मन्दारो देवतरुः श्वेतार्को वा तस्य कुसुमं प्रियं यस्याः ॥१९९॥

**वीराराध्या विराड्रूपा विरजा विश्वतोमुखी ।**
**प्रत्यग्रूपा पराकाशा प्राणदा प्राणरूपिणी ॥ २०० ॥**

**वीराराध्येति**—अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः ।
पराक्रमं परो भुङ्क्ते स्वात्मानमशिवापहम् ॥

इत्यादिनोक्तलक्षणा वीरास्तैराराध्या ।

**विराड्रूपेति**—विराजो लक्षणं पूर्वमुक्तं तद्रूपा ॥

अथ परिभाषायामष्टचत्वारिंशन्नामानि विभजते ।

**गुणभावे गोर्णेद्विश्चतुर्हृदां[1] विभुगुणे भवाङ्गमखे ।**
**वरगुणचतुर्विभाजां खलमवभायान्तरङ्गखिलविभवाः ॥ २८ ॥**

स्पष्टम् ।

**विरजेति**— विगतं रजः पापं यस्याः । विरजसे नम इति प्रयोगः । उत्कलदेशस्थविराजाख्यक्षेत्राधिष्ठात्रीयम् । तदुक्तं **ब्रह्माण्डपुराणे**—

विरजे विरजा माता ब्रह्मणा संप्रतिष्ठिता ।
यस्याः संदर्शनान्मर्त्यः पुनात्यासप्तमं कुलम् ॥

इति । ज्योतिरुदकं लोकाश्च रजःपदेनोच्यन्त इति तु नैरुक्ताः ।

**विश्वत इति** — विश्वतः सर्वावच्छेदेन मुखं यस्याः । 'विश्वतश्चक्षुरुत विश्वतोमुख' इति श्रुतेः । यत्रैवोपासकैर्ध्येयत्वेन रूपं कल्प्यते तत्रैवाविर्भवतीत्याशयेन 'सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुख'मित्यादि वचनानि पारमार्थिकरूपाभिप्रायेण 'अपाणिपादो जवनो ग्रहीते'त्यादीनीत्यविरोधः ।

**प्रत्यगिति**—प्रतिकूलमञ्चतीति प्रत्यक् तादृशं रूपं यस्याः । इन्द्रियाणां विषयोन्मुखत्वं बहिर्मुखत्वं पराङ्मुखत्वं चेत्युच्यते । तत्परित्यागेनान्तरात्मोन्मुखत्वमन्तर्मुखत्वं प्रत्यङ्मुखत्वं चोच्यते । अत एव श्रूयते 'पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्' इति । प्रत्यगवलोक्यमानस्वरूपेति यावत् ।

**पराकाशेति**—पर उत्कृष्टश्चासावाकाशश्च पराकाशः। निर्गुणत्वात्स्त्रीलिङ्गं पराकाशा इति । परब्रह्मेत्यर्थः । 'आकाश इति होवाचाकाशो ह्येवैभ्यो ज्यायानाकाशः परायण'मिति **छान्दोग्ये** आकाशपदेन परब्रह्मैवोच्यते न भूताकाश इति 'आकाशस्तल्लिङ्गा'दिति ब्रह्मसूत्रे निर्णयात् । **कौर्मेऽपि** 'यस्य सा परमा देवी शक्तिराकाशसंस्थिते'ति ।

---

इत्थं हि सा जगतो योनिरेका सर्वात्मिका सर्वनियामिका च ।
माहेश्वरी शक्तिरनादिसिद्धा व्योमाभिधाना दिवि राजतीव ॥

इति च। अथवा 'परमे व्योमन् प्रतिष्ठिते'त्यादिश्रुतिसिद्धं व्योम ब्रह्माण्डपिण्डाण्ड-भेदेन द्विविधमपि पराकाशो ब्रह्म शिवयविलस्थानं तद्रूपा । उक्तं च **चिद्गगनचन्द्रि-कायाम्**—

हृत्क्रियात्मशशिभानुपथ्यग. खे चरत्यनलदृष्टिधाम यः ।
यत्तदूर्ध्वशिखरं परं नभस्तत्र दर्शय शिवं त्वमम्बिके ॥

इति । **स्वच्छन्दसंग्रहेऽपि**—

द्वादशान्तं ललाटोर्ध्वं कपालोर्ध्वावसानकम् ।
द्व्यङ्गुलोर्ध्वं शिरोदेशात्परं व्योम प्रकीर्तितम् ॥

इति । यद्वा सप्तभ्यः समुद्रेभ्यः परतर आकाशः पराकाशः तत्र ललिता षोडशे वर्षेऽवस्थितासती तद्रूपेत्युपचर्यते । तदुक्तं **कादिमते**—

कृतादिवर्षादारभ्य प्रतिवर्षमिति स्थिताः ।
द्वितीयादिषु वर्षेषु क्रमात्ताः परिवृत्तिभिः ॥
षोडशेऽब्दे परे व्योम्नि ललिता सलिलाम्बुधौ ।
चित्रा च भवतीत्थं हि भजन्ते परिवर्तनम् ॥

इति । मेरुपर्वतः सप्तद्वीपाः सप्तसमुद्राः पराकाशश्चेति षोडशसु स्थानेषु कृतयुगस्य प्रथमवर्षे ललिता कामेश्वरी भगमालिनीत्यादिक्रमेण चित्रान्ताः षोडश नित्या-स्तिष्ठन्ति । द्वितीये तु वर्षे ललिता जम्बुद्वीपेऽवतरति । कामेश्वरी तु क्षाराम्बुधिं प्रयाति । तत्रत्या भगमालिनी तु ततोऽप्युत्तरं स्थानमाक्रमते । एवंरीत्या पराकाशे ज्वालामालिनी मेरौ चित्रा तिष्ठति । तृतीये वर्षे क्षाराम्बुधौ ललितेत्यादिक्रमेणो-त्तरोत्तरस्थानाक्रमणेन जम्बुद्वीपे चित्रा तिष्ठतीत्याद्यूह्यमिति तदर्थः । यद्वा पराक-शब्दः कृच्छ्रविशेषवाचकः संस्तपोमात्रोपलक्षकः तस्य आशा दिक् । तपोगम्यो मार्ग इति यावत् । अथवा पराकमश्नाति । पराकादिजन्यफलभोक्त्रीत्यर्थः। परे उत्कृष्टे अके पापदुःखे अश्नाति नाशयतीति वा । 'अकं पापे च दुःखे चे'ति विश्वः । उपमार्थकप्रतीकाशप्रतिस्पर्धिपराकाशशब्दादनुपमेति वार्थः ।

**प्राणदेति**—प्राणान्पञ्चवृत्तिकानेकादशेन्द्रियाणि वा आदत्ते । प्राणान्द्यति खण्डयतीति वा । 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्वे'ति **कौषीतकि-ब्राह्मणे** प्राणपदस्य ब्रह्मपरतेति निर्णीतं प्राणाधिकरणे ।

**प्राणरूपिणीति**—तेन प्राणरूपिणीत्यस्य ब्रह्मरूपेत्यर्थः । 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'ति

र्यण्वत' इति सूत्रेण नकारे पूर्णं ब्रह्मेत्येवार्थः। 'पूर्णमदः पूर्णमिद'मित्यादिश्रुतेः। उक्तं च मनुस्मृतौ—

एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्।
इन्द्रमन्ये परं प्राणमपरे च महेश्वरीम्॥

इति। अथवा नित्यातन्त्रे तावत् 'अथ षोडशनित्यानां कालेन प्राणतोच्यते' इत्यादिना श्वासाख्यं कालमारभ्यैव दिनमासादिकॢप्तिरुक्ता। 'सार्धद्वाविंशतिः श्वासाः क्रमाद्द्वादशराशय' इत्यादिना च राशिचन्द्रसूर्यादितत्त्वना च श्वासमय्येवे-त्यादिरूपा विलक्षणा प्रक्रिया दर्शिता। तद्रीत्या च ललितायाः प्राणात्मत्वमेव स्फुटीभवतीति तद्रूपेत्यर्थः॥ २००॥

**मार्तण्डभैरवाराध्या मन्त्रिणीन्यस्तराज्यधूः।**
**त्रिपुरेशी जयत्सेना निस्त्रैगुण्या परापरा॥ २०१॥**

**मार्तण्डेति**—श्रीपुरे द्वाविंशत्रयोविंशयोः प्राकारयोर्मध्यभूम्यामस्ति मार्तण्ड-भैरवो देव्या देव्युपासकः। तथाचोक्तं तद्वर्णनावसरे दुर्वासदेशिकेन्द्रेण—

चक्षुष्मतीप्रकाशनशक्तिच्छायासमाश्रितवेलिम्।
माणिक्यमुकुटरम्यं मन्ये मार्तण्डभैरवं हृदय॥

इति। मणिमल्लाख्यदैत्यहननायावतारतः शिवो भुवमागतो मल्लारिपदवाच्यो मार्तण्डभैरवपदेनापि व्यवह्रियते इति महाराष्ट्रेषु तन्त्रचिन्तामणिनामके तन्त्रे च प्रसिद्धम्। तत्कृतदेव्याराधनापि मल्लारिमाहात्म्य एव प्रसिद्धा। यद्वा मार्तण्डः सूर्यः। 'मृतेऽण्डे येन संजातो मार्तण्डस्तेन भास्कर' इति स्कान्दात्। शकन्ध्वा-दित्वात्पररूपम्। 'तत्र जात' इति तद्धितः। भैरवो बटुकादिरनेकविधः। तत्र सूर्याराध्यत्वं **पद्मपुराणे**—

देव्या रत्नमयीं मूर्तिं भक्त्या नित्यं दिवाकरः।
पूजयित्वाप्तवान्दिव्यं सूर्यत्वं शुभमुत्तमम्॥

इति। भैरवाराध्यत्वं तु **कालिकापुराणे** बहुशः प्रतिपादितम्। भीरूणां समूहो वा भैरवम्। 'दुर्गे स्मृता हरसि भीतिमशेषजन्तो'रिति देवीस्तुतिप्रकरणे मार्कण्डेय-पुराणात्। सर्वेषामेकशेषे तैराराध्या। अथवा 'उद्यमो भैरव' इति शिवसूत्रे प्रतिपादित उद्योगो भैरव इत्युच्यते। स एव मोहान्धकारनाशकत्वान्मार्तण्डः। तदुक्तम् 'मोहजयादनन्ताभोगात्सहजं विद्याजय' इति सूत्रे वार्तिककारैः—

मोहस्तमो निजाख्यातिस्तज्जायात्तत्पराभवात्।

> आभोगो यस्य विस्तार ईदृशाद्वर्णितात्मनः ।
> भवेत्सहजविद्याया जयो लाभोऽस्य योगिनः ॥

इति । मार्तण्डतुल्येन भैरवेणोद्योगविशेषेणाराध्या लभ्येत्यर्थः ।

मन्त्रिणीति—मन्त्रिणी श्यामलाम्बा । राज्योपयोगिविचारवाचकमन्त्रशब्दादिनिप्रत्यये नान्तत्वात् ङीप् । तस्यां न्यस्ता निक्षिप्ता राज्यधूः राज्यभारो यया । तदुक्तं ब्रह्माण्डपुराणे राज्यशामलां प्रक्रम्य—

> ललितापरमेशान्या राज्यचर्चा तु यावती ।
> शक्तीनामपि या चर्चा सर्वा तस्यां वशंवद ॥

इति । अथवा मन्त्रोपासका मन्त्रिणः । मननत्राणधर्मवत्त्वान्निर्मलचित्तमेव वा मन्त्रस्तद्वन्तो मन्त्रिणः । तान्नयति भगवन्त्यैश्वर्यं प्रापयतीति मन्त्रिणी प्रयत्नविशेषः । तस्मिन्मन्त्रिण्यां न्यस्ता निवेशिता राज्यस्य स्वसाम्राज्यरूपस्यैक्यरहस्यस्य धूस्तज्जनकतावच्छेदको धर्मो यया । उपासकानां योगिनां च प्रयत्नविशेषेणैक्यताप्तिरपि देव्यधीनेति फलितार्थः । तदिदमुक्तं 'चित्तं मन्त्रः' । 'प्रयत्नः साधकः' । 'विद्याशरीरस्फुरत्ता मन्त्ररहस्यं' इति त्रिभिः शिवसूत्रैः । उक्तं च भगवता कृष्णदासेन 'चेत्यतेऽनेन परमं स्वात्मतत्त्वं विमृश्यते। इति चित्तं स्फुरत्तात्मप्रासादादिविमर्शनम् तदेव मन्यते गुप्तमभेदेनान्तरेश्वरम् । स्वस्वरूपमनेनेति मन्त्रस्तेनास्य देशिकैः । पूर्णाहन्तानुसंध्यात्मस्फूर्जन्मननधर्मतः । संसारक्षयकृत्त्राणधर्मतो रविरुच्यते। तन्मन्त्रदेवतामर्शप्राप्ततत्सामरस्यभूः । आराधकस्य चित्तं च मन्त्रस्तद्धर्मयोगतः । अस्य चोक्तस्य मन्त्रस्य मननत्राणधर्मिणः । उक्तमन्त्रानुसंधानावष्टम्भोद्यन्त्रणात्मकः । प्रयत्नोऽन्तःस्वसंरम्भः स एव खलु साधकः । यतो मन्त्रयितुर्मन्त्रो देवतैक्यसमप्रभः। ईदृक्साधकयुक्तेन योगिना प्रथमोदितम् । पूर्णाहन्तानुसंध्यात्म वीर्यं मन्त्रस्य लभ्यते। विद्येति परमाद्वैतसंप्रवेदनरूपिणी । शरीरं यस्य भगवान् शब्दराशिः स उच्यते । तस्य सम्यक्समस्ताध्वपूर्णाहन्तास्वरूपिणी । स्फुरत्ता सैव मन्त्राणां मननत्राणधर्मिणाम् । गुप्तार्थता जनानां तु रहस्यमिति कथ्यते' इति । क्षेमराजवृत्तावितोऽपि विस्तरो द्रष्टव्यः ।

त्रिपुरेशीति—सर्वाशापरिपूरकचक्राधीश्वर्यास्त्रिपुरेशीति नाम । तदभेदादियमम्बापि तथोच्यते ।

जयत्सेनेति— जयन्ती भण्डासुरादिजयिनी सेना शक्तिसमूहो यस्याः । जयत्सेनाख्यराजविशेषस्वरूपा वा ।

निस्त्रैगुण्येति— निर्गतं त्रैगुण्यं सत्त्वादिरूपं यस्याः ।

परापरेति—परशब्दोऽपरशब्दः परापरशब्दो वा यस्य वाचकस्तत्स्वरूपत्वा-त्परापरा । परोऽन्यः अपरस्तद्भिन्नत्वात्स्वीयः । यद्वा पर उत्कृष्टः । अपरो निकृष्टः 'ब्रह्मदासा ब्रह्मदाशा ब्रह्मेमे कितवा उते' ति श्रुतिः । परो वैरी । अपरो मित्रम्। 'न मे द्वेष्योऽस्ति न प्रिय' इति स्मृतिः । परो दूरस्थः । अपरोऽन्तिकस्थः । 'दूरस्थं चान्तिके च तदि' ति स्मृतिः । 'परः स्यादुत्तमानात्मवैरिदूरेषु केवले' इति विश्वः । परमपरं चेति द्विविधं सामान्यं परापराख्यं तृतीयं च । ब्रह्म द्विविधं केवलशबल-भेदात्क्रमेण परमपरमुच्यते । 'एतद्वै सत्यकाम परं चापरं चे' ति श्रुतेः । 'द्वे ब्रह्मणी वेदितव्ये परं चापरमेव चे' ति स्मृतेश्च । परं ब्रह्म परं विशेषणं शक्तिः । अपरं पूर्वं विशेष्यं शिवः 'सामरस्यसंबन्धेन शक्तिविशिष्टः शिव एव हि परंब्रह्म । 'युजं वां ब्रह्म पूर्व्यं नमोभि' रिति श्रुतौ युवयोर्मध्ये पूर्वं विशेष्यभूतं ब्रह्म नमोभि-र्युनज्मीत्युक्त्या शिवस्य नमःशेषिण. पूर्व्यमिति निर्देशात् स्वार्थे यत् । 'एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः' इति श्रुतावपूर्व्या पूर्वस्माद्भिन्ना परेति देव्या निर्दे-शात् । सृष्ट्यादावीक्षणात्मकोष:कालायमानशक्तेरिह स्तूयमानत्वादित्यादिः शिवा-नन्दलहर्यां विस्तरः । व्योमापि परमपरं चेति द्विविधम् । 'विद्या द्विधा परा चैवा-परा चे' ति मुण्डकोपनिषदुक्ता । लिङ्गपुराणेऽपि—

> द्वे ब्रह्मणी वेदितव्ये परा चैवापरा तथा ।
> अपरा तत्र ऋग्वेदो यजुर्वेदो द्विजोत्तमाः ।।
>
> सामवेदस्तथाथर्ववेदः सर्वार्थसाधकः ।
> शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च ।।
>
> ज्योतिषं चापरा विद्या पराक्षरमिति स्थितम् ।
> तददृश्यं तदग्राह्यमगोत्रं तदवर्णकम् ।।

इत्यादि । 'असंवृतं तदात्मैव परा विद्या नचान्यथे' त्यन्तम् । परोऽपरश्चेति प्रणवो द्विविधः । तदुक्तं स्कान्दे यज्ञवैभवखण्डे—

> परापरविभागेन प्रणवो द्विविधो मतः ।
> परः परतरं ब्रह्म प्रज्ञानन्दादिलक्षणम् ।।
>
> प्रकर्षेण नवं यस्मात्परं ब्रह्म स्वभावतः ।
> अपरः प्रणवः साक्षाच्छब्दरूपः सुनिर्मलः ।।
>
> प्रकर्षेण नवत्वस्य हेतुत्वात्प्रणवः स्मृतः ।
> परमप्रणवप्राप्तिहेतुत्वात्प्रणवोऽथवा ।।

इति । परोऽपरश्चेति द्विविधो वेदार्थः । तदुक्तं तत्रैव—

> परापरविभागेन वेदार्थो द्विविधः स्मृतः ।

अपरो धर्मनाशः स्यात्तत्परप्राप्तिसाधनम् ।

इति । योगशास्त्रे परमपरं परापरं चेति त्रिविधम् ज्ञानमुक्तम्—

ज्ञानं तत्त्रिविधं ज्ञेयं परापरविभेदतः ।
तत्राद्यं परमं ज्ञानं पशुपाशात्मदर्शनम् ॥
द्वितीयं परमं ज्ञानं केवलं पाशदर्शनम् ।
यथा दृष्टचन्तरं रात्री नरमार्जारनेत्रयोः ॥
तथा विलक्षणं ज्ञानं परापरमुदीरितम् ।

इति । परा अपरा परापरा चेति पूजा त्रिविधा । तदुक्तं नित्याहृदये

तत्र नित्योदिता पूजा त्रिभिर्भेदैर्व्यवस्थिता ।
परा चाप्यपरा गौरि तृतीया च परापरा ।
प्रथमाद्वैतभावस्था सर्वप्रचरगोचरा ।
द्वितीया चक्रपूजा च सदा निष्पाद्यते मया ॥
एवं ज्ञानमयी देवी तृतीया स्वप्रथामयी ।

इति । परापरा चेति वाक् द्विविधा । अपरा तु पश्यन्त्यादिभेदात्त्रिविधा । परापरा चेति अवस्था द्विविधा । तत्र परा तुर्या । अपरा तु जाग्रदाभेदात्त्रिविधा । तदुक्तं विज्ञानभैरवभट्टारकैः—

यत्र यत्र मनो याति बाह्ये वाभ्यन्तरे प्रिये ।
तत्र तत्र परावस्था व्यापकत्वात्प्रसिध्यति ॥

इति । परोऽपरश्चेति द्विविधो होमः । तत्रापरः स्थूलसूक्ष्मभेदात्पुनर्द्विविधः । तदिदमुक्तं स्वतन्त्रतन्त्रे प्रसिद्धं स्थूलहोमं मूलाधाराग्न्याधिकरणकं प्राणाग्निहोत्र समानधर्माणं सूक्ष्महोमं च प्रतिपाद्य तदन्ते—

वाच्यार्थानामशेषेण वेद्यवस्तुविदात्मनाम् ।
स्थितिः परो भवेद्धोमः सर्वभेदविलापनात् ॥
स्वात्मरूपमहावह्निज्वालारूपेषु सर्वदा ।
निरुद्धेन्धनरूपेषु परमार्थात्मनि स्थिरे ॥
निर्व्युत्थानविलापस्तु परहोमः समीरितः ।

इति । मन्त्रपारायणान्तर्गतमन्त्रविशेषः परापरेत्युच्यते ॥ देव्यपि त्रिविधा परा अपरा परापरा चेति । तदुक्तं वराहपुराणे त्रिमूर्तिं प्रकृत्य—

त्र ष्टिः पर प्रोक्ता श्वेतवर्णस्वरूपिणी ।

> अपरा सा समाख्याता रौद्री चैव परापरा ।
> एतास्मिन्सोऽपि सिध्यन्ति यो रुद्रं वेत्ति तत्त्वतः ॥

इति । अत्र परापरपदयोर्विभजनेन सप्तदशार्थमिलनेन तु पञ्चेति द्वाविंशतिः । अन्येऽपि यथालाभं योजनीयाः ॥ २०१ ॥

> **सत्यज्ञानानन्दरूपा सामरस्यपरायणा ।**
> **कपर्दिनी कलामाला कामधुक्कामरूपिणी ॥ २०२ ॥**

**सत्यमिति**—सत्यं ज्ञानं आनन्दश्च रूपं यस्याः । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्मेति' श्रुतेः । गता सद्विद्या तद्विषये अज्ञा अनभिज्ञा ये तेषामना नन्दमानन्दभिन्नं दुःखमेव रूपयति ददातीति । 'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते' इति बृहदारण्यके ईशावास्ये च श्रवणात् । अविद्यामिति पदकाराणां पदपाठः । 'विद्यान्योपासनामेवं निन्दत्यारण्यकश्रुति' रिति ब्रह्माण्डपुराणे उपबृंहणं च । यद्वा । सत्या विद्यादेव्या अज्ञानं येषां ते सत्यज्ञानाः तेषामानन्दाख्यान् लोकान् रूपयतीति आरण्यक एवोक्तश्रुतेः परतस्तथा श्रवणात् ।

> आनन्दा नाम ते लोका अन्धेन तमसा वृताः ।
> तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधा जनाः ॥

इति ।

**सामरस्येति**—समो न्यूनानधिको रसो ययोस्तयोः शिवशक्त्योर्भावः सामरस्यमेव परमयनं स्थानं यस्याः । उक्तं चाभियुक्तैः—

> परस्परतपःसंपत्फलायितपरस्परौ ।
> प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥

इति । 'भोक्तृभोग्यकरणोर्मिसंक्षये सामरस्यरसदोहिनी शिवे' त्यादिकालिदासोक्तिश्च । 'समप्रधानौ समसत्त्वौ समौ तयोरि' ति श्रुतिश्च । अमरैः सहितस्य सामरस्य लोकस्य परायणमाश्रयो वा । रस्यन्ते गीयन्त इति रस्यानि सामानि च तानि रस्यानि च तानि परायणान्यभीष्टानि यस्या वा । बहुलग्रहणान्न विशेषणस्य पूर्वनिपातः । 'परायणमभीष्टं स्यात्तत्पराश्रययोरपी' ति विश्वः । कपर्द इत्यधिकृत्य 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने' इति सूत्रसंहिताटीकाकारैर्लिखितात्स्मरणाद्बाहुल्यप्रशंसादिमती । वराटकमलाभूषिता वा । मैरालावतारस्य शिवस्याङ्गना महालसानाम्नी वराटकालंकारैव 'पव पूर्तौ' विति धातोर्भावे क्विपि राल्लोपे च परशब्दः पूर्तिवाची । अन्तर्भावितण्यर्थात्कर्तरि वा क्विपि पूरवाची ।

**कपर्दिनीति**—कस्य गङ्गाजलस्य पूरं प्रवाहं दापयति शोधयतीति कपर्दः ।

गात्कः । गङ्गाया अपि पाविका यज्जटेत्यर्थः । 'कपर्दः खण्डपरशोर्जटाजूटे वराटके इति विश्वः । 'आर्भटया शशिखण्डमण्डितजटाजूटा' मिति लघुस्तवोक्तरूपवती वा । कपर्दिनामकस्य शिवस्य पत्नी वा । देवीपुराणेऽष्टषष्टिशिवक्षेत्रगणनावसरे 'छगलाण्डे कपर्दिनमि' ति स्मरणात् ।

कलेति—कलानां चतुःषष्ट्यादिरूपाणां माला परम्परा । कलां लावण्यं मां शोभां च लातीति वा ।

कामेति—कामान् दोग्धीति कामधुक् । मनोरथान्पूरयतीत्यर्थः । कामधेनु-स्वरूपा वा । 'सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैत्वि' ति श्रुतेः ।

कामरूपिणीति—कामः परशिव एव रूपमस्याः । 'सोऽकामयत बहुस्यां प्रजायेय' इति श्रुतिसिद्धजगत्सिसृक्षावानीश्वरः कामेश्वरः तमधिकृत्य काण्वा अधीयते 'य एवायं काममयः पुरुषः स एव दैवशाकल्यतस्य का देवतेति स्त्रिय इति होवाचे' ति । कामं यथेच्छं वा रूपाण्यस्याः ॥ २०२ ॥

कलानिधिः काव्यकला रसज्ञा रसशेवधिः ।
पुष्टा पुरातना पूज्या पुष्करा पुष्करेक्षणा ॥ २०३ ॥

कलानिधिरिति—कलानां नानाविधतया पूर्वं वर्णितानां निधिः 'आत्मैवास्य षोडशी कले' ति बृहदारण्यकोक्तेरात्मनां जीवानां निधिर्वा । चन्द्रमण्डलरूपा वा । 'योनिवर्गः कलाशरीर' मिति शिवसूत्रे कलाशब्दः कर्मपरत्वेन तद्भाष्ये व्याख्यातः। तेन कर्माणि निधीयन्तेऽस्यामिति वा । अधिकरणे किः । 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत' इति स्मृतेः ।

काव्येति—कवेः कर्म काव्यम् । तच्च नाटकशाटकभाणडिमप्रहसनादिभेदा-दनेकविधमग्निपुराणादौ प्रदर्शितं तादृशकलाप्यस्या एव रूपम् । उक्तं च विष्णु-पुराणे—

काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च ।
शब्दमूर्तिधरस्यैतद्वपुर्विष्णोर्महात्मनः ॥

इति । काव्योत्पादकप्रतिभैव वा काव्यकला । ध्यानविशेषेण काव्यनिर्माणसामर्थ्य-प्रदत्वस्य तन्त्रेषु बहुशो वर्णनात् । काव्यस्य शुक्रस्य मृतसंजीवन्याख्यकलारूपा वा ।

रसज्ञेति—रसान् शृङ्गारादिभेदेन दशविधान् जानातीति रसज्ञा । रसने-न्द्रियस्वरूपा वा ।

रसेति—रसस्य ब्रह्मानन्दस्य शेवधिर्निधिः ।

रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति ॥

इति श्रुतेः। ब्रह्माण्डेऽपि —

रस एव परं ब्रह्म रस एव परा गतिः।
रसो हि कान्तिदः पुंसां रसो रेत इति स्मृतम् ॥
रसो वै रसमंलब्ध्या ह्यानन्दी भवत्यपि।
वेदप्रामाण्यसंसिद्ध्या रसः प्राणतया स्थितः ॥
को ह्येवान्यात्कः प्राण्यादित्यपि श्रुतिभाषितः।
प्राणात्मको रसः प्रोक्तः प्राणदः कुम्भसंभव: ॥

इति। 'निधिः शेवधि' रिति यास्कः। 'निधिर्ना शेवधि' रिति कोशात्पुंलिङ्गौ निधिशेवधिशब्दौ। तेन कलानिधये नमः। रसशेवधये नम इत्येव प्रयोगो न वाक्षिको निध्यै नमः शेवध्यै नम इति। कलानां रसानां च निधिः शेवधिर्यस्या इति विग्रहे तु सोऽपि संभाव्यते ॥

**इति श्रीभासुरानन्दकृते सौभाग्यभास्करे।**
**शतकेनाष्टमेनाभूद्विश्वाख्या नवमी कला ॥ ८०० ॥**

**इति श्रीललितासहस्रनामभाष्येऽष्टमशतकं नाम नवमीकला ॥ ९ ॥**

**पुष्टेति**—षट्त्रिंशत्तत्त्वविग्रहशालित्वात्पुष्टा। बहुभिर्गणैर्ब्रह्मरसेन ब्राह्मणैर्वा पुष्टा। 'ब्राह्मणैः पोषितं ब्रह्म' इति स्मृतेः। 'ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्म' दिति श्रुतेश्च।

**पुरातनेति**—सर्वेषामादिभूतत्वात्पुरातना। स्त्रीत्वभावश्छान्दसः। पुरातना गुणा अस्यां सन्तीत्यर्थे मत्वर्थीयाच्प्रत्ययान्ताद्वा टाप्।

**पूज्येति**—अत एव सर्वेषां पूज्या पूजयितुं योग्या, प्रतीक्ष्या वा।

**पुष्करेति**—पुष्कं पोषणं रात्यादत्तेऽसौ पुष्करा। पुष्कराख्यतीर्थरूपा वा। रलयोरभेदाद् व्याप्तेति वा।

**पुष्करीति**—पुष्कराणीव कमलानीक्षणानि नयनानि यस्याः।

पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः।
ओषधीद्वीपविहगतीर्थरागोरगान्तरे ॥
पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेपि च।

इति विश्वः। एवं पुष्कराख्यो योगोऽपि पाद्मे प्रसिद्धः

विशाखास्थो यदा भानुः कृत्तिकासु च चन्द्रमाः ।
स योगः पुष्करो नाम पुष्करेष्वतिदुर्लभः ।।

ष्करशब्दः पृथिवीपरोऽपि । तदुक्तं पद्मपुराण एव—

या पद्मकर्णिका देवास्तां पृथ्वीं परिचक्षते ।
ये पद्मे सारगुरवस्तान्दिव्यान्पर्वतानिह ।।

यानि पर्णानि पद्मस्य म्लेच्छदेशास्तु तेऽभवन् ।
यान्यधोभागपत्राणि ते सर्पाणां सुरद्विषाम् ।।

एवं नारायणस्यार्थे मही पुष्करसंभवा ।
प्रादुर्भावोच्छ्रयस्तस्मान्नाम्ना पुष्करसंज्ञिता ।।

यथासंभवं मह्यादिविषये क्षण उत्सवो निर्व्यापारस्थितिर्वा यस्या इति निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण ' इत्यमरः । सप्तम्या अलुक् । ो न्यग्रोधवृक्षपरोऽपि दृश्यते । पुष्करद्वीपपदस्य तद्वत्त्वेन मत्स्यपुराणे र्तनात् । ' न्यग्रोधः पुष्करद्वीपे पुष्करस्तेन स स्मृत ' इति । विष्णुपुराणेऽपि पुष्करद्वीपे ब्रह्मणः स्थानमुत्तम ' मिति । ' स प्रजापतिरेकः पुष्करपर्णे 'ति श्रुतिरपि । न्यग्रोधपर्णशायित्वात् विष्णुरत्र लक्षणया गृह्यते । तत्रेक्षणं नणं यस्या इति वा । तदुक्तं देवीभागवते—

वटपत्रशयानाय विष्णवे बालरूपिणे ।
श्लोकार्धेन तदा प्रोक्तं भगवत्याखिलार्थदम् ।।

म्भस्स्वीक्षणं यस्या इति वा । ' तानि वा एतानि चत्वार्यम्भांसि देवा पितरो सुरा ' इति श्रुतेः ।। २०३ ।

**ज्योतिः परंधाम परमाणुः परात्परा ।**
**ाहस्ता पाशहन्त्री परमन्त्रविभेदिनी ।। २०४ ।।**

**ज्योतिरिति**—परमुत्कृष्टं ब्रह्मात्मकं ज्योतिः । ' तद्देवा ज्योतिषां ज्योति- तेऽमृत ' मिति बृहदारण्यकात् । ' न तत्र सूर्यो भाति न चन्द्रतारकं नेमा ान्ति कुतोऽयमग्नि ' रिति श्रुत्या ' येन सूर्यस्तपति तेजसेद्ध ' इति श्रुत्या च ' परं ज्योतिरुपसंपद्य ' ति श्रुतिरपि । ' मनो ज्योतिर्जुषतां ' ' वाचैवायं ते ' इत्यादिप्रयोगात्प्रकाशमात्रं ज्योतिरुच्यते तेष्वात्मज्योतिः परमिति दक्षिणामूर्तिसंहितायां पञ्चमपटलोक्तोऽष्टाक्षरमन्त्रोऽपि परंज्योतिरुच्यते ।

**धामेति**—परं धाम उत्कृष्टं तेजः ।

इति **गीतासु** धामशब्दस्यावस्थापरतया तदतिक्रान्तं यत्परं धाम । उक्तं चाचार्यैः—

त्रिषु धामसु यद्भोग्यं भोक्ता यश्च प्रकीर्तितः ।
वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥

इति । **यज्ञवैभवखण्डे**ऽपि—

जाग्रत्स्वप्नसुषुप्त्याख्यं वेदधामत्रयं तु यः ।
स एवात्मा न तद्दृश्यं दृश्यं तस्मिन्प्रकल्पितम् ॥
त्रिधामसाक्षिणं सत्यज्ञानानन्दादिलक्षणम् ।
त्वमहंशब्दलक्ष्यार्थं परं धाम समाश्रये ॥

इति । धामशब्दः पदपरो वा । परं पदमित्यर्थः । 'तद्विष्णोः परमं पद'मिति श्रुतेः । **कूर्मपुराणे**ऽपि—

सैषा माहेश्वरी गौरी मम शक्तिर्निरञ्जना ।
शान्ता सत्या सदानन्दा परं पदम् ॥

इति श्रुतिरपि । परस्मै ज्योतिषे नमः, परस्मै धाम्ने नम इति प्रयोगः । परमिति मान्तमव्ययमित्याहुः ।

**परमाणुरिति**—परमा च साण्वी च 'वोतो गुणवचना'दिति विधिवैकल्पि-कत्वात् ङीबभावः । 'अणोरणीयानि'ति श्रुतिः । दुर्ज्ञेयेत्यर्थः । तार्किककल्पिताः पीलवोऽप्यस्या एव रूपमिति वा । परम उत्कृष्टोऽणुर्मन्त्रो वा ।

**परात्परेति**—परादुत्कृष्टाद्ब्रह्मविष्णुरुद्रादपि परा श्रेष्ठतरा । यद्वा ब्रह्मायुः-परिमाणं परमित्युच्यते तस्मात्परा तादृशसंख्यापरिच्छेदरहिता । तत्र परंधामत्वं परमाणुत्वं च हेतुः । तथैव च दर्शितं **कालीपुराणे**—

तस्य ब्रह्मस्वरूपस्य दिवारात्रं च यद्भवेत् ।
तत्परं नाम तस्यार्धं परार्धमभिधीयते ॥
स ईश्वरस्य दिवस्तावती रात्रिरुच्यते ।
स्थूलात्स्थूलतमः सूक्ष्माद्यस्तु सूक्ष्मतमो मतः ॥
न तस्यास्ति दिवारात्रिव्यवहारो न वत्सरः ।

इति ।

**पाशेति**—पाशो हस्ते वामाधःकरे यस्याः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्या'विति पूर्वनिपातापवादः । पाशान् हस्तयते हस्तेन निरस्यतीति वा ।

**पाशहन्त्रीति**—पाशानां हन्त्री नाशिका । उक्तं च **हरिवंशे**—

नागपाशेन बद्धस्य तस्योपहतचेतसः ।
त्रोटयित्वा करैर्नागपञ्जरं वज्रसंनिभम् ॥
बद्धं बाणपुरे वीरमनिरुद्धमभाषत ।
सान्त्वयन्ती च सा देवी प्रसादाभिमुखी तदा ॥

इत्यादि । परेषां स्वोपासकद्विषां राज्ञां मन्त्रान्प्रभुमन्त्रोत्साहाख्यशक्तित्रयान्तर्गतान् शक्तिविशेषणान्विशेषाद्भिनत्ति । यद्वा परैरभिचाराद्यर्थं प्रयुक्तो मनुः परमन्त्रः, शत्रुप्रयुक्तोऽस्त्रमन्त्रो वा । उक्तं च हरिवंशे प्रद्युम्नं प्रतीन्द्रसंदेशे 'तदस्त्रप्रतिघाताय देवीं स्मर्तुमिहार्हसी'ति । यद्वा पर उत्कृष्टो मन्त्रः पञ्चदशीरूपस्तं विभेदयति—

मनुश्चन्द्रः कुबेरश्च लोपामुद्रा च मन्मथः ।
अगस्तिरग्निः सूर्यश्च नन्दी स्कन्दः शिवस्तथा ॥
क्रोधभट्टारको देव्या द्वादशामी उपासकाः ।

इति तन्त्रोक्तरीत्या द्वादशविधं करोति । अथवा परा उत्कृष्टा ये मन्तारो मनन-कर्तारस्तेषामवीन् पापानि भेदयति नाशयति ।

अविशब्देन पापानि कथ्यन्ते श्रुतिषु द्विजैः ।
तैर्मुक्तं न मया त्यक्तमविमुक्तमतः स्मृतम् ॥
इति लिङ्गपुराणेऽविपदस्य पापपरत्वकथनात् ॥ २०४ ।

**मूर्तामूर्तानित्यतृप्ता मुनिमानसहंसिका ।**
**सत्यव्रता सत्यरूपा सर्वान्तर्यामिणी सती ॥ २०५ ॥**

**मूर्तेति**—रूपवद्वस्तु मूर्तं वाय्वाकाशादिकममूर्तं तत्तद्रूपेति नामद्वयार्थः । यद्वा पञ्चीकृतानि महाभूतानि मूर्तानि अपञ्चीकृतानि तु भूतसूक्ष्माण्यमूर्तानि । '**द्वे वाव ब्रह्मणो** रूपे मूर्तं चामूर्तं चे'ति श्रुतौ द्वेधापि व्याख्यानदर्शनात् । प्रपञ्च-ब्रह्मणी वा मूर्तामूर्ते—

द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।
क्षराक्षरस्वरूपे ते सर्वभूतेष्ववस्थिते ॥
अक्षरं ब्रह्म कूटस्थं क्षरं सर्वमिदं जगत् ।

इति विष्णुपुराणदर्शनात् । चलनात्मकक्रियावत्त्वं मूर्तत्वमिति तार्किककल्पनाया निर्मूलत्वेनाश्रद्धेयत्वात् ।

**अनित्येति**—अनित्यैरेवोपचारैस्तृप्तेति पञ्चाक्षरं नाम भक्तिमात्रप्रियत्वात् । अथवा अनिति श्वसतीति जीवोऽनितिपदार्थः । 'इक्श्तिपौ धातुनिर्देशे' इत्यनेन शब्दनिर्देशे श्तिपो विधानेऽपि प्रकृते धात्वर्थपरोऽयमनितिः । 'यजतिषु येयजामहं करोती'ति श्रुतौ 'इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्व'मिति जैमिनिसूत्रे 'ईक्षतेर्ना-शब्द'मिति व्याससूत्रेऽर्थपरस्यापि प्रयोगस्य दर्शनात् । ततश्च जीवैस्तृप्तेत्यर्थः ।

'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन' इति श्रुत्या सर्वभक्षकत्वात् । यद्वा इति एवंप्रकारेण अतृप्ता न, तृप्ता न भवतीति न । द्वौ नञौ प्रकृतमर्थं गमयतः । ईदृशः प्रकारो नास्ति येन तृप्ता न स्यात् । अपि तु सर्वैरपि प्रकारैस्तृप्तैव ।

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ।।

इति वचनेन भक्तिमात्रेण यत्किंचिदपि दत्तं तृप्तिकार्येवेति कथनात् ।

**मुनिमानसेति**— मुनीनां मानसं मन एव श्लेषात् मानसाख्यं सरस्तत्र हंसीव । स्वार्थे कः । यद्वा मुनीनां माने बहुमानविषये सहंसिकेव पादकटकयुक्तेव । तेषां मानेन संतोषात् नृत्यतीवेति तात्पर्यार्थः । 'हंसकः पादकटकः' इति कोशः ।

**सत्यव्रतेति**—सत्यं ब्रह्मैव व्रतं भक्ष्यमुपचारात्तत्प्रियं यस्याः । 'पयोव्रतं ब्राह्मणस्ये'ति श्रुतौ व्रतपदस्य भक्ष्ये प्रयोगदर्शनात् सत्यमेव व्रतं यस्या वा सत्योक्तिमात्रपरिपालनरूपव्रतेन लभ्येति यावत् । सत्यानि शीघ्रफलदानि व्रतानि यस्या वा। कृष्णप्राप्त्यर्थं गोपीभिः कृतानां कात्यायनीव्रतानां शीघ्रमेव फलवत्तया विष्णुभागवते वर्णनात् ।

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वथा तस्मै ददाम्येतद्व्रतं मम ।।

इति भगवदुक्तं व्रतममोघं यस्या इति वा । अथवा 'शरीरवृत्तिर्व्रत'मिति शिवसूत्रे शरीरधारणमपि व्रतमेवेत्युक्तम् ।

शिवभक्तिसुधापूर्णे शरीरे वृत्तिरस्य या ।
व्रतमेतदनुष्ठेयं न तुच्छं तच्च धारणम् ।।

इति वार्तिकात् तादृशं व्रतं सत्यमावश्यकं यया यद्भक्त्या सा। अत एव शरीरधारणं प्रार्थितं भगवता भट्टोत्पलेन—

अन्तरुल्लसितस्वच्छशक्तिपीयूषपोषितम् ।
भवत्पूजोपभोगाय शरीरमिदमस्तु मे ।।

इति । अथवा सत्यव्रतो नाम ब्राह्मणः सूकरभयात् ऐऐ इत्युच्चार्य तावतैव तपसा महाकविर्देवीभक्तो जातस्तदभेदात्सत्यव्रता । तदुक्तं देवीभागवते तृतीयस्कन्धे—

अनक्षरो महामूर्खो नाम्ना सत्यव्रतो द्विजः ।
श्रुत्वाक्षरं कोलमुखात्समुच्चार्य स्वयं ततः ।।
बिन्दुहीनं प्रसङ्गेन जातोऽसौ विबुधोत्तमः ।
ऐकारोच्चारणादेव तुष्टा भगवती तु [illegible] ।।

चकार कविराजं तं दयार्द्रा परमेश्वरी ।

इत्यादि ।

**सत्यरूपेति**—सत्यं कालत्रयाबाध्यं रूपं यस्याः । रूपपदान्मत्वर्थीयेऽचि सत्यं रूपवद्ययेति वा । सत्यसंरक्षिकेति यावत् । तथा च बह्वृचाः पठन्ति 'सच्चासच्च वचसी पस्पृधाते । तयोर्यत्सत्यं यतरदृजीयस्तदित्सोमोऽवति हन्त्यासत्' इति । उमया सहितः सोम इत्यर्थः ।

**सर्वान्तरिति**—सर्वेषामन्तःकरणनियामक इति । 'एष त आत्मान्तर्याम्यमृत' इत्यन्तर्यामिब्राह्मणात् । 'एषोऽन्तर्याम्येष योनिः सर्वस्ये'ति **माण्डूक्यश्रुतेश्च** । सर्वा च सान्तर्यामिणी चेति वा सर्वस्वरूपा सर्वेषामन्तश्च प्रविष्टेत्यर्थः । 'तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवदि'ति श्रुतेः । स्मृतिश्च—

सर्वस्य सर्वदा ज्ञानात्सर्वस्य प्रभवाप्ययौ ।
सतोऽसतश्च कुरुते तेन सर्वेति कथ्यते ॥

इति ।

**सतीति**—पातिव्रत्यात्सद्रूपत्वाच्च सती । दाक्षायण्या इदं नाम । तदुक्तं **ब्रह्मपुराणे** हैमवतीं प्रकृत्य

सा तु देवी सती पूर्वमासीत्पश्चादुमाभवत् ।
सहव्रता भवस्यैव नैतया मुच्यते भव ॥

इति ॥ २०५ ॥

**ब्रह्माणी ब्रह्मजननी बहुरूपा बुधार्चिता ।**
**प्रसवित्री प्रचण्डाऽऽज्ञा प्रतिष्ठा प्रकटाकृतिः ॥ २०६ ॥**

**ब्रह्माणीति**—ब्रह्मरूपा अणिपुच्छं अणीमाण्डव्य इति संज्ञायाः शूलाग्रचिह्नितत्वमात्रेण माण्डव्यमुनौ प्रवृत्तेः । 'अणिरक्षाग्रकीले स्यादणिः पुच्छेऽग्निसीमयो'रिति शाश्वतः । आनन्दमयकोशस्थपुच्छब्रह्मरूपेत्यर्थः । 'ब्रह्म पुच्छं प्रतिष्ठे'ति श्रुतिश्च । ब्रह्माणमानयति जीवयतीति वा । 'ब्रह्माणी ब्रह्मजननाद्ब्रह्मणो जीवनेन वे'ति **देवीपुराणात्** । ब्रह्माणशब्दः पितामहपरस्तस्य स्त्री वा ।

**ब्रह्मेति**—ब्रह्म यन्मुक्तप्राप्यं तत् स्वात्मभिन्नं ज्ञानम् । तदुक्तं **विष्णुपुराणे**—

प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥

**जननीति**—सर्वप्रपञ्चस्योत्पादकत्वाज्जननी । अत्र वकारादिनामप्रायपाठ-स्वारस्यानुरोधादुक्तदेवीपुराणैकवाक्यत्वलिप्सया ब्रह्माणीपदनिर्वचनपरत्वेन ब्रह्म-जननीत्येकं पदं स्वीकर्तुं युक्तम् । एतत्पक्षे सर्वान्तर्यामिणीत्यत्र सर्वेति भिन्नं पद-मास्थेयम् । नचान्तर्यामिणीत्यस्य सकारादिनामप्रायपाठस्य संदर्भविरोधापत्तिः । अन्तर्यामिपदमात्रेणाविशेषात्सर्वान्तर्यामित्वेन सिद्धे एकपदपक्षे सर्वपदवैयर्थ्यापत्त्या प्रायपाठविरोधेनापि तत्सार्थक्यवर्णनस्योचितत्वात् । 'विश्वमाता जगद्धात्री विशा-लाक्षी विरागिणी' त्यादिदर्शनेन तत्प्रायमध्ये तदाद्येव नाम छेत्तव्यमिति नियमस्या-नित्यत्वाच्च ।

प्रपञ्चजनयितृत्वादेवाह—**बहुरूपेति** । बहूनि रूपाणि यस्याः । तदुक्तं **देवी-पुराणे** 'अरूपापरभावत्वाद्बहुरूपा क्रियात्मिके'ति । परब्रह्मभावनारूपाया अपि भण्डा-सुरहननादिबहुविधक्रियाकारित्वात्तत्तद्रूपवत्त्वेन बहुरूपत्वमपीति पक्षेऽर्थः । तथाच गौडपादानां सूत्रं 'भण्डासुरहननार्थमेकैवानेके'ति **देवीपुराण** एव प्रघट्टकान्तरे—

बहूनि यस्या रूपाणि स्थिराणि च चराणि च ।
देवमानुषतिर्यञ्चि बहुरूपा ततः शिवा ।।

इति । **सूतसंहितायां** तु—

एकधा च द्विधा चैव तथा षोडशधा स्थिता ।
द्वात्रिंशद्भेदभिन्ना वा या तां वन्दे परात्पराम् ।।

इति । द्विधा स्वरव्यञ्जनरूपा । अकारादिस्वरभेदात्षोडशधा । ककारादिभेदेन द्वात्रिंशद्विधा । ळलयोरभेदात् हकारस्य सर्वमूलत्वेन व्यष्टौ गणनाभावाच्चेति तद्-व्याख्यातारः । प्रत्यासत्त्या त्रयस्त्रिंशत्परमेतत्सहस्रनामारम्भकवर्णनपरं वा द्वात्रिंश-त्पदमित्यपि सुवचम् । भागवतेपि 'लक्ष्मीवागादिरूपेण नर्तकीव विभाति ये'ति । **वामनपुराणे**ऽपि—

विश्वं बहुविधं ज्ञेयं सा च सर्वत्र वर्तते ।
तस्मात्सा बहुरूपत्वाद्बहुरूपा शिवा मता ।।

इति । असंख्याताः सहस्राणि ये रुद्रा अधिभूम्या'मिति श्रुतिप्रसिद्धाना रुद्राणां पत्नीत्वेनापि बहुरूपा । तदुक्तं **वाराहपुराणे**—

या रौद्री तामसी शक्तिः सा चामुण्डा प्रकीर्तिता ।
नवकोटयस्तु चामुण्डा भेदभिन्ना व्यवस्थिताः ।।
या सा तु राजसी शक्तिः पालनी चैव वैष्णवी ।

या ब्रह्मशक्तिः सत्त्वस्था अनन्तास्ताः प्रकीर्तिताः ।
एतासां सर्वभेदेषु पृथगेकैकशो धरे ।।
सर्वासां भगवान्रुद्रः सर्वगत्वात्पतिर्भवेत् ।
यावन्त्यस्ता महाशक्तयस्तावद्रूपाणि शंकरः ।।
कृतवांस्ताश्च भजते पतिरूपेण सर्वदा ।
यश्चाराधयते तास्तु तस्य रुद्रः प्रसीदति ।।
सिद्ध्यन्ति तास्तदा देव्यो मन्त्रिणो नात्र संशयः ।

इति । सर्वमेतदभिप्रेत्योक्तं **नारसिंहोपपुराणे** 'उमैव बहुरूपेण पत्नीत्
स्थिते' ति । **त्रिपुरासिद्धान्तेऽपि**—

लोपामुद्रा च सौभाग्या महाविद्या च षोडशी ।
दाराः परशिवस्यैते कथितास्तु वरानने ।।
श्यामला शुद्धविद्या च हयारूढा परा प्रिया ।
दाराः सदाशिवस्यैते ज्ञातव्याः परमेश्वरी ।।
महार्थी द्वादशार्था च वाराही बगलामुखी ।
तुरीया भुवनेशी च श्रीपरा शांभवी शिवे ।।
दारा रुद्रस्य तस्यैव शृणु सत्यं न संशयः ।
श्रीतिरस्कारिणी लक्ष्मीर्मिश्रा कामकला प्रिये ।।
विष्णोर्दारा इति ख्याता अन्नपूर्णा शिवस्य च ।
वाग्वादिनी च बाला च पत्न्यौ ते ब्रह्मणः शिवे ।।
नव दूत्यो हसन्ती च नव सिद्धाश्च देवताः ।
इमा अन्याश्च रूपाणि बहूनि तव सुन्दरी ।।

इति । एवं बहुरूपानामनिरुक्तिरपि प्रतिमहापुराणं प्रत्युपपुराणं प्रतितन
रूपैवोपलभ्यते । विस्तरभयात्तु न लिख्यते ।

**बुधेति**—बुधैर्ज्ञानिभिरर्चिता पूजिता ।

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ।।

इति गीतावचनात् ।

**प्रसवित्रीति**—प्रकर्षेण वियदादिप्रपञ्चं प्रजा वा सूत इति प्रसवित्री

ब्रह्माद्याः स्थावरान्ताश्च यस्या एव समुद्गताः ।
महदादिविशेषान्तं जगद्यस्याः समुद्गतम् ॥
तामेव सकलार्थानां प्रसवित्रीं परां नुमः ।

इति ।

**अथ परिभाषामण्डले एकोनपञ्चाशन्नामानि विभज्यन्ते ।**

**गुणगौर्णे विभज्य चतुर्गुणदामृदुचतुर्बलांशाद्येषु ।**
**द्विर्गुणगुणितां लिखितां चतुःखचरला तद्धेद्विरेफात् ॥ २९ ॥**

अथ तृतीयचतुःशब्दोऽष्टाक्षरनामसंख्यापरः । इतरौ चतुरक्षरनामसंख्यापरौ ॥ २९ ॥

**प्रचण्डेति**—प्रकृष्टाश्चण्डाः कोपना यस्या दूताः सा । 'चडि कोपे' । अत एव 'भीषास्माद्वातः पवते' इति श्रुतिः ।

न यस्य कोपोऽणुरपि प्रजास्तस्य न बिभ्यति ।
येनां नीतिं कथं रक्षेत्प्रजा यस्य न बिभ्यति ॥

इति कामन्दकश्च । भयप्रदत्वलिङ्गादेव हि 'महद्भयं वज्रमुद्यत'मिति श्रुतौ वज्रपदं ब्रह्मपरमित्युक्तं कम्पनाधिकरणे । प्रकृष्टा प्रीतिविषयत्वेन चण्डा शङ्खपुष्पी यस्या इति वा । प्रतापशालिनीति वा ।

चण्डा धनहरी शङ्खपुष्पी चण्डोऽतिकोपने ।
प्रचण्डा दुर्वहे श्वेतकरवीरे प्रतापिनि ॥

इति **विश्वः** ।

**आज्ञेति**—आज्ञा वेदः प्रवर्तनानिवर्तनात्मिका भगवदिच्छारूपा । अत एव **लैङ्गे** शिववचनम् ।

ममैषा प्रकृतिर्जीवो विकृतिर्वा चिदात्मनः ।
पुरा ममाज्ञा मद्वक्त्रात्समुत्पन्ना सनातनी ॥
पञ्चवक्त्रा महाभागा जगतामभयप्रदा ।

इति । **शिवपुराणेऽपि** 'रुद्राज्ञैषा स्थिता देवी ह्यनया मुक्तिरव्यये'ति । ज्ञेत्येकाक्षरमपि सुवचनम् । गुणभोक्तृपुरुषस्वरूपेत्यर्थः । 'कथयन्ति ज्ञशब्देन पुरुषं गुणभागिन'मिति **लैङ्गात्** । 'ज्ञो विरिञ्चौ बुधे सौम्ये' इति **कोशाद्**बुधविधिस्वरूपा वा । 'ज्ञः कालकालो गुणी सर्वविद्य' इति श्रुतिरपि ।

**प्रतिष्ठेति**—सर्वजगतोऽधिष्ठानत्वात्प्रतितिष्ठत्यस्यां विश्वमिति प्रतिष्ठा ।

दानवे ' इतिवच्च पीठन्यासान्तेपि ' मातृकावत्सादा न्यसे ' दित्युक्तेरैकरूप्यं संगच्छते। बहिर्मातृकान्यासे विशत्यैकपञ्चाशतामुक्तत्वेन तत्साम्येनात्रापि तथैव सिद्धेः, तन्त्रान्तरैकवाक्यतायाः संभवन्त्यास्त्यागायोगाच्चेति । प्रकृते एकपञ्चाशत्पदमपेक्षितमेवेति यद्याग्रहस्तदा रूपपदमेकसंख्यापरत्वेन व्याख्यायताम् । ' रूपे शून्य ' मिति पिङ्गलसूत्रे हलायुधादीनां तथा व्याख्यानदर्शनादिति दिक् ।

निःश्रृङ्खलेति---श्रृङ्खला कर्मादिनिर्बन्धः निगडवद्बन्धसाधनत्वात् । अत एवोक्तमभियुक्तैः---

पातकप्रचयवन्मम तावत्पुण्यपुञ्जमपि नाथ लुनीहि ।
काञ्चनी भवतु लोहमयी वा श्रृङ्खला यदि पदोर्न विशेषः ॥

इति । विगता श्रृङ्खला यस्याः विधिनिषेधानामविद्यावद्विषयत्वात् । नग्नेति वा । अलंपुरादिपीठेषु तादृशदेवीमूर्तिदर्शनात् ' स्वयोनिदर्शनान्मह्यमपशुवर्गमिनुस्मरे ' दिति तिरस्करिणीध्यानदर्शनाच्च, जवनिकाया जवनिकान्तरानपेक्षत्वेन तादृशध्यानस्य युक्तत्वाच्च । ' श्रृङ्खला स्यात्कटीवस्त्रबन्धेऽपि निगडेऽपि च ' ति विश्वः ।

विविक्तेति---विविक्तो विजनदेशः स एव च पवित्रोऽपि । ' सर्वत्र मेध्या वसुधा यत्र लोको न दृश्यत ' इति हारीतस्मृतेः । ' विविक्तौ पूतविजना ' वित्यमरकोशात् सजनोऽपि पवित्रः अपवित्रोऽपि विजनो देशश्चेति द्वावपि विविक्तौ । इह तु पवित्रत्वे सति विजनता विवक्षिता । तादृशस्थले तिष्ठति । अपवित्रजनसंमर्दे वाध्ये यत्प्रादुर्भावाभावानुभवात् । आत्मानात्मविवेकशालिषु तिष्ठतीति वा ।

वीरेति---वीरा उपासकधुरंधराः, रणे अभिमुखे हता वा । तेषां माता जननी हितकर्तृत्वात् । ' वीरं मद्यस्य भाजने ' इति विश्वकोशात्पानपात्रं तन्मातीति वा । अथवा वीराख्यो गणेश्वरोऽम्बया पुत्रत्वेन स्वीकृत इति वीरमाता । तथाच पद्मपुराणे वीरकं प्रकृत्य शिववाक्यम्---

स एष वीरको देवि सदा मे हृदयप्रियः ।
नानाश्चर्यगुणाधारि गणेश्वरगणार्चितः ॥

इत्यादितत्प्रशंसाश्रवणोत्तरं देव्युवाच ।

ईदृशस्य सुतस्यास्ति ममोत्कण्ठा पुरान्तक ।
कदाहमीदृशं पुत्रं द्रक्ष्याम्यानन्ददायकम् ॥

शिव उवाच ।

एष एव सुतस्तेऽस्तु नयनानन्दहेतुकः ।
त्वया पुत्रः कृतार्थः स्याद्वीरकोऽपि सुमध्यमे ॥

भवेति—भवः संसार एव रोगस्तं हन्ति । 'नान्यं पश्यामि भैषज्यमन्तरेण वृषध्वज'मिति भारतोक्तात् ।

> व्याधीनां भेषजं यद्वत्प्रतिपक्षस्वभावतः ।
> तद्वत्संसाररोगाणां प्रतिपक्षः शिवाश्रयः ॥

इति शिवपुराणाच्च । भवचक्रं संसारमण्डलं प्रवर्तयति, भवचक्रवत्प्रवर्तयतीति वा । तदुक्तं मनुस्मृतौ—

> एवं सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः ।
> जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत् ॥

इति । विष्णुपुराणेऽपि—

> त्वमेव सर्वजगतामीश्वरो बन्धमोक्षयोः ।
> तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं हरम् ॥

इति । भवचक्रमनाहतचक्रं वा तत्र शिवस्यावस्थानात् । ननु कोणपत्रसमुच्चयस्यैव चक्रपदवाच्यतामिति तान्त्रिकसिद्धान्तादनाहते कोणाभावात्कथं चक्रपदेन तदुपस्थितिः। अत एव 'अनाहताब्जनिलये'त्येव प्रयोगः । केवलपत्रसमुदाये पद्मत्वं केवलकोण-समुदाये चक्रत्वमिति सिद्धान्तादिति चेन्न । कोणत्वाभिप्रायेण मूलाधारादिष्वपि चक्रव्यवहार इति वदद्भिर्विद्यारत्नभाष्यकारैरेतस्यैव समाहितत्वात् । पत्रेषु कोणत्वा-रोपाद् कोणव्यवहार इति तदाशय इति केचित् । तत्र कोणत्वविवक्षायां यन्त्रत्व-विवक्षापत्तेर्यन्त्रव्यवहारस्यैवापत्तेः । अतस्तत्कर्णिकोपरि त्रिकोणस्य सत्त्वादित्येव भाष्याशयं युक्तमुत्पश्यामः । बिन्दुचक्राष्टदलषोडशदलवृत्तत्रयभूपुरत्रयाणि श्रीचक्रा-न्तर्गतानि वा भवचक्राणि । भवस्य शिवस्य चक्रं मनः प्रवर्तयतीति वा । 'चक्रं हि मन एवे'ति विष्णुपुराणे 'चलत्स्वरूपमत्यन्तं जवेनान्तरितानिलम्। चक्रस्वरूपं च मनो धत्ते विष्णुः करे स्थित'मिति ॥ २०८ ॥

> छन्दःसारा शास्त्रसारा मन्त्रसारा तलोदरी ।
> उदारकीर्तिरुद्दामवैभवा वर्णरूपिणी ॥ २०९ ॥

छन्दस्सारेति—छन्दःशब्दो वेदपरो गायत्र्यादिपरः पैङ्गलतन्त्रपरो वा । 'छन्दः पद्ये च वेदे च स्वैराचाराभिलाषयो'रिति विश्वः । परो वादौ। सारशब्दो न केवलं पुल्लिङ्गः । 'संसारे किं सारं' 'सा दशा वै तात्त्विकी'त्यादिप्रयोगात् । 'सारो बले मज्जनि च स्थिरांशे न्याय्ये च नीरे च धने च सारम्। वेदेऽप्यवत्सार-मुदाहरन्ती'ति च विश्वः । अत्र स्थिरांशशब्दो निष्कृष्टांशपरः अनिष्कृष्टस्या-स्थिरत्वात् । ततश्च वेदे उपनिषद्भागेऽस्याः स्वरूपनिष्कर्षः । छन्दःसु सारो निष्कर्षो यस्या इति विग्रहः । गायत्र्यादिछन्दःसु निष्कृष्टं रूपं गायत्रीमन्त्रस्तस्यापि

तज्ज्ञानार्थमुपाया विद्या लोके चतुर्दश प्रोक्ताः ।
तेष्वपि च सारभूता वेदास्तत्रापि गायत्री ॥
तस्याः पादत्रितयं वेदैर्यत्पाठ्यते स्पष्टम् ।
वेदेषु चतुर्ष्वपि परमत्यन्तं गोपनीयतरम् ॥
कामो योनिः कमलेत्येवं संकेतितैः शब्दैः ।
व्यवहरति न तु प्रकटं यां विद्यां वेदपुरुषोऽपि ॥

आथर्वणेऽपि त्रैपुरसूक्ते षोडशर्चे—

कामो योनिः कमला वज्रपाणि
र्गुहा हसा मातरिश्वाभ्रमिन्द्रः ।
पुनर्गुहा सकला मायया च
पुरूच्यैषा विश्वमाता च विद्या ॥

इत्यस्यामृचि कादिविद्याया उद्धारः । पिङ्गलतन्त्रे हि 'द्विकौ ग्लौ । मिश्रौ च' इति सूत्रद्वयेन महाप्रस्तारः प्रतिपादितः स चानवधिकस्यापि शब्दजालस्य निःशेषेण ज्ञानोपायः । स च छन्दोभास्कर एवास्माभिः प्रकटीकृतश्छन्दःशास्त्रे । वर्णं माहात्म्यं यस्या वैखर्याः सरस्वत्या इत्यर्थः । यद्वा—

यत्र यत्र मनस्तुष्टिर्मनस्तत्रैव धारयेत् ।
तत्र तत्र परानन्दस्वरूपं संप्रकाशते ॥

इति **विज्ञानभैरवभट्टारको**क्तरीत्योपासकयोगिनो यदिच्छा स एव धर्मः । यन्नेच्छा स एवाधर्मः । उक्तं च **शाकुन्तले** 'सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तय' इति । सदाचारस्मृत्युक्तो निबन्धोऽपि प्रौढोल्लासावधिक एव 'प्रौढान्तं समयाचारा' इति कल्पसूत्रात् । सर्वमेतदभिप्रेत्य कौलोपनिषदि श्रुतौ 'धर्मोऽधर्मः अधर्मो धर्म' इति । **योगिनीहृदये**ऽपि—

पिबन्नृत्यन्नमन्खादन्स्वैराचारपरः स्वयम् ।
अहन्तेदन्तयोरैक्यं भावयन्विहरेत्सुखम् ॥

इत्युक्तरीत्येदृशमनःसमाधिमतामिच्छाविषयोऽर्थो नियमेन धर्म एव भवतीत्येतदभिप्रायः । स्मृतिष्वपि 'श्रुतिः स्मृतिः सदाचार आत्मनस्तुष्टिरेव च' इति धर्मप्रमाणेषु मनःप्रवृत्तेर्गणनमीदृशसमाहितमनःपरमेव । अन्यथातिप्रसङ्गात् । ईदृशं सर्वेषां वर्णं सारं स्थाय्यं यस्या इत्यर्थः । अभिलाष इच्छा सारो निष्कृष्टरूपं यस्या इति वा । देव्या इच्छाशक्तिस्वरूपत्वात् । सारपदस्य श्रेष्ठपरत्वे तु निरुपाधिकत्वान्नास्त्येव
[illegible]

जन्मेति—जन्मादित्रयेण तप्तेभ्यो जनेभ्यो विश्रान्तिभिर्दुःखापहारिभिर्व्यवतं स्वात्मसुखं दत्ते ।

सर्वेति—सर्वास्वैतरेयादिषूपनिषत्सु रहस्यभूतासु श्रुतिशिरोभूतवावतन्तिषूत्कर्षेण घुष्टा प्रतिपाद्या । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'त्यत्रोपनिषत्पदस्य रहस्यपरत्वेन व्याख्यानदर्शनात् । तस्य निरुक्तिरप्याचार्यैर्दर्शिता—

उपनीये ममात्मानं ब्रह्मापास्तद्वयं सतः ।
निहन्त्यविद्यां तज्जां च तस्मादुपनिषन्मता ।।

इति । अत्रोत्कर्ष ऐकरूप्यम् । उच्चैस्त्वस्य धातुनैव लाभात् । 'उच्चैर्घुष्टं तु घोषणे'ति कोशात् । ऐकरूप्यं च प्रतिवेदान्तं विहितानां सगुणब्रह्मोपास्तीनां भेदाभावः । तदिदं 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषा'दित्यधिकरणे स्पष्टम् ।

शान्तीति—आकाशनिष्ठा कला शान्त्यतीतेत्युच्यते । तत्स्वरूपं च शैवागमे 'शान्त्यतीतकलाद्वैतनिर्वाणानन्दबोधदे'ति । तदात्मिका तदभिन्ना ।। २१० ।।

**गम्भीरा गगनान्तस्था गर्विता गानलोलुपा ।**
**कल्पनारहिता काष्ठाऽकान्ता कान्तार्धविग्रहा ।। २११ ।।**

गम्भीरेति—अनन्त्याद्गम्भीरा । महाह्रदस्वरूपेत्यर्थः । तथा च शिवसूत्रम् 'महाह्रदानुसंधानान्मन्त्रवीर्यानुभव' इति ।

महाह्रद इति प्रोक्ता शक्तिर्भगवती परा ।
अनुसंधानमित्युक्तं तत्तादात्म्यविमर्शनम् ।।
मन्त्रवीर्यमिति प्रोक्तं पूर्णाहन्ताविमर्शनम् ।
तदीयोऽनुभवस्तस्य स्फुरणं स्वात्मनः स्फुटम् ।

इति । अन्यत्रापि—

परा भट्टारिका संविदिच्छाशक्तिपुरःसरम् ।
स्थूलप्रमेयपर्यन्तं वमन्ती विश्वमान्तरम् ।।
प्रमात्रन्तर्बहीरूपा हृषीकविषयात्मनाम् ।
प्रवर्तकत्वस्वच्छत्वगम्भीरत्वादिधर्मतः ।।
महाह्रदो जगद्व्यापी देशकालाद्यगोचरः ।

इति । 'गं' इति गणपतिबीजम् । तेन गणपतिरेवोच्यते । तस्य भियं रात्यादत्ते

**गगनेति** —गगनस्य दहराकाशस्य भूताकाशस्य पराकाशस्य वान्तर्मध्ये तिष्ठतीति । 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येक' इति श्रुतेः । गगनस्यान्ते नाशकालेऽपि तिष्ठति वा । गगनं अकारः, अन्तस्था यरलवा इति पञ्चभूतबीजोद्धारः ।

**गर्वितेति** गर्वो विश्वनिर्माणविपयिणी पराहन्ता, सास्याः सञ्जाता । तारकादित्वादितच् ।

**गानेति** - गानं तता-नद्ध-सुपिर-घनचतुष्टयसमुच्चयात्मकं, वादित्रादिकं वा, शारीरं गान्धर्वं वा, साम वा तयोर्लोलुपा सतृष्णा ।

**कल्पनेति**—कल्पना वासनामय्यो दृश्यवीचयस्ताभी रहिता । तासां कल्पितत्वादेव । यद्वा कल्पेऽपि नाराणां हिता । 'संवर्तः प्रलयः कल्प' इति कोशः । 'नॄ नय' इति धातोः । 'नयतीति नरः प्रोक्तः परमात्मा सनातन' इति स्मृत्या च । नरस्येमे नारा जीवाः । सकलनाशकारिणि प्रलयकालेऽपि जीवानां स्वोदरे वासनारूपतया स्थापने हितकर्त्री किमुत सृष्टिस्थितिकाल इति यावत् । उक्तं **चाष्टावक्रगीतायां**—

> मय्यनन्ते चिदम्भोधावाश्चर्यं जीववीचयः ।
> उद्यन्ति घ्नन्ति खेलन्ति प्रविशन्ति स्वभावतः ॥

इति ।

**काष्ठेति**—अष्टादशनिमेषात्मकः कालः काष्ठा । दारुहरिद्रापि काष्ठा । सा हि स्कन्धनाभिनालपरिणामरूपत्वाच्छिवशक्तयोरभिन्नैवेति **भैरवतन्त्रे** कथा । 'काष्ठा दारुहरिद्रायां कालमानप्रभेदयो'रिति रभसः । तदुभयरूपा । वेदान्तवाक्यार्थतत्त्वनिष्कर्षोऽपि काष्ठा । तदुक्तं **सूतसंहितायाम्**—

> प्रतीतमप्रतीतं वा सदसच्च परः शिवः ।
> इति वेदान्तवाक्यानां निष्ठा काष्ठेति कथ्यते ॥

इति । 'सा काष्ठा सा परा गति'रिति श्रुतिश्च । यद्वा गगनात्मकस्य भीमनामकस्य परशिवस्य पत्नी स्वर्गमाता देवी दिक्स्वरूपत्वात्काष्ठेत्युच्यते । तथाच **लैङ्गे**—

> चराचराणां भूतानां सर्वेषामवकाशदः ।
> व्योमात्मा भगवान्देवो भीम इत्युच्यते बुधैः ॥
>
> महामहिम्नो देवस्य भीमस्य परमात्मनः ।
> दशस्वरूपादिक्पत्नी सुतः स्वर्गश्च सूरिभिः ॥

इति । **वायुपुराणेऽपि**—

अवशेनापियन्नाम्नः कीर्तनात्प्रमुच्यते नरः ।
स कथं न महादेवः सेव्यते बुद्धिशालिभिः ॥

इति । देवीभागवते तृतीयस्कन्धे—

अस्पष्टमपि यन्नाम प्रसङ्गेनापि भाषितम् ।
ददाति वाञ्छितानर्थान्दुर्लभानपि सर्वथा ॥

इति । शक्तिरहस्येऽपि—

मदात्प्रमादादुन्मादाद्दुःस्वप्नात्स्खलनादपि ।
कथितं नाम ते गौरि नृणां पापापनुत्तये ॥

इति । मदः सुरापानादिजन्यः । प्रमादोऽनवधानता । उन्मादो भूताद्यावेशः । उत्स्वप्नो निद्रादशायामभिलापः । स्खलनं किंचिद्वक्तुं प्रवृत्तस्य मुखात्तदतिरिक्त-शब्दनिःसरणम् । किंच अस्ति हि महाभाष्ये प्रसिद्धः कूपखानकन्यायः—'तृषा-निवृत्तिपङ्कलेपनिरासफलकस्य कूपस्य खननेऽपि जायेते एव तृषापङ्कलेपौ, तावपि सिद्धकूपे तज्जन्यजलेन नश्यत एवेति राजन् ङस् पुरुष सु इत्याकारकापशब्दप्रयोग-जन्यं पातकं तज्जन्यराजपुरुषेति परिनिष्पन्नरूपप्रयोगेण नश्यतीति स्वीकारात् । तेन न्यायेन प्रकृतेऽपि नामस्मरणनाश्यतावच्छेदकपापत्वावच्छिन्नत्वाविशेषान्नामस्मर-णाङ्गलोपजन्यपातकस्यापि तेनैव नामस्मरणेन नाश इति नानवस्था । अनेनैवा-शयेन ग्रन्थान्तेऽस्माभिर्वक्ष्यते 'तथाप्यन्तः सन्तः सदयहृदया नाममहिमाप्यपूर्वस्त-स्मान्मे न खलु खलपापोभयभय'मिति । अपूर्वः स्वाङ्गलोपजनितपातकनिवर्तकरूपः पूर्वं प्रायश्चित्तादिकर्मसु क्वाप्यक्लृप्त इति तदर्थः । न च श्रौतस्मार्तादिप्रायश्चित्त-साङ्गतायै नामकीर्तनस्योपयोगोऽस्त्विति वाच्यम् । 'तद्धेतोरेवास्तु तद्धेतुत्वं किं तेने'ति न्यायविरोधात् । तदिदं सर्वमुक्तमास्माकीनशिवस्तवे—

वेधा वैधापराधानपि शिव बहुधा तान्समाधातुमाधात्प्रायश्चित्तानि
  वित्ताधिपजनसुविधेयानि वैषम्यभाञ्जि ।
कृच्छ्रेऽप्यच्छेदमाप्ते पुनरपि यजनं पूर्णयज्ञान्तराये
  त्वेकाल्पाज्येन पूर्णाहुतिरिति बहुशस्तत्त्वमेतन्न जाने ॥
कृत्यस्याकरणेऽप्यकृत्यकरणेऽप्युक्तं पुराणादिषु
  प्रायश्चित्तगणे परं शिवशिवेत्युच्चारणं भक्तितः ।
कृत्वा कर्म महेश तत्प्रतिसमाधानाय चेत्त्वस्मृतिः
  सादावेव कृता न तारयति किं तस्मात्त्यजामि क्रियाः ॥

इति । कर्मणः समाधानाय प्रायश्चित्तं तस्यापि समाधानान्तरं प्रति समाधान-मित्यर्थः । तस्मान्नामानुकीर्तनमेव परायणमिति भावः ॥ ३०१ ॥

लौकिकाद्वचनान्मुख्यं विष्णुनामानुकीर्तनम् ।
विष्णुनामसहस्राच्च शिवनामैकमुत्तमम ॥ ३०२ ॥

ननु नामकीर्तनसामान्यस्य पापक्षयजनकत्वे प्रकृते किमायातमित्याशङ्क्य सर्वेषां पुण्यवन्नाम्नामविशेषेण पापनाशकत्वेऽपि तमोहराणां खद्योताग्निचन्द्रसूर्यादीनां तेजसामिवास्ति तारतम्यं तत्रैवैतदेव सर्वातिशायीति कथनाय सारालंकारेण भूमिकाभेदान्वर्णयति—लौकिकादिति । लौकिकादित्यस्यायमर्थः घटपटादिशब्दप्रयोगेऽप्यस्त्येव पुण्यम् । 'एकः शब्दः सम्यग्ज्ञातः सुष्टुप्रयुक्तः स्वर्गे लोके कामधुग्भवती' ति वचनात्, तादृशशब्दसहस्रोच्चारणमपेक्ष्य विक्रमार्कादिपुण्यश्लोकमनुजवाचकस्यैकस्य शब्दस्योच्चारणं विशिष्टफलदम् । उक्तं च विष्णुभागवते—

> ध्रुवं ब्रह्मऋषीन्सप्त पुण्यश्लोकांश्च मानवान् ।
> उत्थायापररात्रान्ते प्रयताः सुसमाहिताः ॥
> स्मरन्ति मम रूपाणि मुच्यन्ते तेंऽहसोऽखिलात् ।

इत्यादि, तादृशनामसहस्रकीर्तनमपेक्ष्येति लौकिकाद्वचनादित्यस्यार्थः । विष्णुनामेति विष्णूनां नामेति विग्रहः । अनन्तसंख्यानां विष्णूनां मध्ये यस्य कस्यचिदन्यतमस्यापि नामैकवचनादेकमपीत्यर्थः । अनुकीर्तनदित्यस्यानुकीर्त्यमानमित्यर्थः । अनुसृतं कीर्तनं यस्येति विग्रहात् । इदं च पदं शिवनामादिषूत्तरत्राप्यनुवर्तते । शिवानां नाम रुद्रेश्वरशिवमहेश्वरसदाशिवानां नाम । वातुलशुद्धे तत्त्वभेदपटले—

> शिवमेकं विजानीयात्सादाख्यं पञ्चधा भवेत् ।
> महेश्वरो महासेनः पञ्चविंशतिभेदवान् ॥

इत्यादिनान्यत्र च तद्भेदा उक्ता अनुसंधेयाः । अयं भावः—विष्णूनामानन्त्येऽप्येकैव भूमिका । रुद्रादीनां तूत्तरोत्तरं भूमिका भिद्यन्ते । तास्वप्येकैकस्यां रुद्रादेरानन्त्यमेवेति द्योतनाय विष्णुपदसमानयोगक्षेमगुणिवाचका । 'महेश्वरो महासेनः पञ्चविंशतिभेदक' इत्यादिनान्यत्र च तद्व्यूहा उक्ता अनुसंधेयाः । रुद्रपदमनुक्त्वा सर्वानुस्यूतं शिवपदं प्रयुक्तम् । तेन विष्णुनाम ततः परं रुद्रनाम ततः परमेश्वरीनामेत्याद्या भूमिका उन्नेयाः । इयांस्तु विशेषः । विष्णूनां तरतमभावापन्नत्वेनानन्त्याद्यथाकथंचिदपि तन्नामोच्चारणं समानफलकमेव । शिवानां तु तरतमभावेनाप्यानन्त्यात्परस्परनामसांकर्याच्च तादृशतादृशभूमिकापदार्थानुसंधानपुरःसरं कीर्त्यमानं नाम तथातथोत्तममिति । अथवा विष्णुरप्यादित्यादिगणान्तर्गतत्वादिरीत्याप्यनन्तविध एवेति तथापि नामसंकरेऽर्थानुसंधानत एव विशेषो बोद्धव्यः । तत्तदसाधारणशब्दास्तु यथाकथंचित्कीर्त्यमाना अप्युत्तमा एव । अत एव परशिवे शिवादिशब्दा मुख्या इत्युक्तं सूतसंहितायाम्—

नामानि सर्वाणि तु कल्पितानि स्वमायया नित्यसुखात्मरूपे ।
तथापि मुख्यास्तु शिवादिशब्दा भवन्ति संकल्पनया शिवस्य ।।

इति । विष्णुनामभ्यो रुद्रादिनाम्नामुत्तमत्वमपि । तत्रैव यमं प्रति शतानन्दमुने-र्वाक्यम् —

शिवरुद्रादिशब्दान्यो विशिष्टान्वेद मानवः ।
नारायणादिशब्देभ्यस्तं त्वं परिहर प्रभुम् ।।

इति । पराशरपुराणेऽपि—

देवताभ्यः समस्ताभ्यः स्रष्टा ब्रह्मा परः स्मृतः ।
ब्रह्मणश्च महाविष्णुर्वरिष्ठः सर्वपालकः ।।
विष्णोरपि परः साक्षाद्रुद्रः संहारकारकः ।

इति । सूतगीतायामपि—

त्रिषु रुद्रो वरिष्ठः स्यात्ततो मायी परः शिवः ।
मायाविशिष्टात्सर्वज्ञात्साम्बः सत्यादिलक्षणः ।।
वरिष्ठो मुनयः साक्षाच्छिवो नात्र विचारणा ।
शिवाद्वरिष्ठो नैवास्ति मया सत्यमुदीरितम् ।।

इति । अत्र मायीतिपदेनेश्वरशिवमहेश्वरसदाशिवा अभेदेन गृहीताः ।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
एते पञ्च महाप्रेताः पादमूले व्यवस्थिताः ।।

इतीश्वराद्भेदेन मध्ये सदाशिवस्य कीर्तनात् ।

शिवात्मके महामञ्चे महेशानोपवर्हणे ।
अतिरम्यतले तत्र कशिपुश्च सदाशिवः ।।
भूतकाश्च चतुष्पादा महेशश्च पतद्ग्रहः ।
तत्रास्ते परमेशानी महात्रिपुरसुन्दरि ।।

इति भैरवयामले कामेश्वरातिरिक्तानां षण्णां कीर्तनात् । भृतका भृत्याः । द्रुहिण-हरिरुद्रेश्वरा इति तदर्थात् बहुरूपाष्टकप्रस्तारादिष्वप्येवमेव । साम्ब इत्यस्य त्रिपुरसुन्दर्यभिन्नः कामेश्वरशिवोऽर्थः सत्यादिलक्षण इति । तानि च कौर्मे—

सत्यं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवम् ।
योगिनस्तत्प्रपश्यन्ति महादेव्याः परं पदम् ।।
आनन्दगं परं ब्रह्म केवलं निष्कलं परम् ।
परात्परतरं तत्त्वं शाश्वतं शिवमव्ययम् ।।

अनन्तप्रकृतौ लीनं देव्यास्तत्परमं पदम् ।
शुभ्रं निरञ्जनं शुद्धं निर्गुणं दैन्यवर्जितम् ॥
आत्मोपलब्धिविषयं देव्यास्तत्परमं पदम् ॥

इति । एवं स्थितेऽप्येतेषां नामतो रूपतश्चावान्तरभेदे तत्त्वत ऐक्यान्नाम्नामपि सांकर्यात्तत्प्रतिपादकपुराणानां पार्थक्याभावाच्च शिवनामैकमित्येवोक्तम् । अनेनैवाशयेन शक्तिरहस्यादौ—

चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते ।
पितामहसहस्राणि विष्णोरेका घटी मता ॥
विष्णोर्द्वादशलक्षाणि निमेषार्धं महेशितुः ।
दशकोट्यो महेशानां श्रीमातुस्त्रटिरूपका ॥

इत्यादौ विष्णुदेव्योर्मध्ये महेश एवोक्तः । ननु विष्णोरुत्कर्षप्रतिपादकानि वचनानि विष्णुपुराण-विष्णुभागवत-बृहन्नारदीयादिषु भूयांस्येव दृश्यन्त इति चेत, सत्यं दृश्यन्ते, परंतु तानि परत्वेन सह तात्त्विकैक्याभिप्रायेणेत्यविरोधः । तदप्युक्तं पराशरोपपुराणे—

वैष्णवेषु पुराणेषु योऽपकर्षस्तु दृश्यते ।
रुद्रस्यासौ हरस्याय विभूतेरेव केवलम् ॥

इति । तथा सूतसंहितायाम्—

विष्णुप्रजापतीन्द्राणामुत्कर्षं शंकरादपि ।
प्रवदन्तीव वाक्यानि श्रौतानि प्रतिभान्त्यपि ॥
तानि तत्त्वात्मना तेषामुत्कर्षं प्रवदन्ति हि ।
विष्णुप्रजापतीन्द्रेभ्यो रुद्रस्योत्कर्षमास्तिकाः ॥
वदन्ति यानि वाक्यानितानि सर्वाणि हे द्विजाः ।
प्रवदन्ति स्वरूपेण तथा तत्त्वात्मनापि च ॥
नवं विष्ण्वादिदेवानामिति तत्त्वव्यवस्थितिः ।

इति । अत्र रुद्रपदेन सांबः कामेश्वर उच्यते । विष्ण्वादिदेवानामित्यादिपदेन विष्णुदेव्योर्मध्यपातिनः सर्वेऽपि शिवा उच्यन्ते । तेषां चेयत्तातिरहस्यत्वाद्गुरुमुखकवेद्या । नचैवं सति विष्ण्वादेरविनाशित्वबोधकवचनजातविरोधः । तस्यापि तत्त्वदृष्ट्यैव 'अहं मनुरभवं सूर्यश्चे'त्यादिवामदेववचनवदुपपत्तेः । अस्मदाद्यपेक्षया चिरतरजीवित्वेन स्वरूपतोऽप्युपपत्तेश्च । तदुक्तं मत्स्यपुराणे—

शतायुः पुरुषो यस्तु सोऽनन्तः स्वल्पजन्मनः ।
जीवतो योऽमृतश्चाग्रे तस्मात्सोऽमर उच्यते ॥
अदृष्टजन्मनिधने ह्येवं विष्ण्वादयो मताः ।

इति ॥ ३०२ ॥

**शिवनामसहस्राच्च देव्या नामैकमुत्तमम् ।**
**देवीनामसहस्राणि कोटिशः सन्ति कुम्भज ॥ ३०३ ॥**

एवं कामेश्वरस्याधिक्ये सिद्धे तदभेदादेव तच्छक्तेर्देव्याः पूर्वेभ्य उत्तमत्वं सिद्धमेव । परस्परमपि 'शक्त्या विना शिवे तेक्ष्मे नामधाम न विद्यते' इत्यादितन्त्रवचनेषु 'शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितु' मित्यादिना **सौन्दर्यलहर्यां** च कथयितुं युक्त्यैव सर्वानुभवसिद्धया शिवोत्कर्षस्य शक्तिमूलकत्वे सिद्धे 'तद्धेतोरेवास्त्वि' ति न्यायेनाम्बाया एव सर्वोत्तमत्वं सिद्ध्यतीत्याशयेनाह—**शिवेति** । देव्यास्त्रिपुरसुन्दर्याः परशिवाभिन्नाया नामेत्यसमस्तोक्तिर्देव्यानन्त्यभ्रमनिरासाय । तेन **वातुलशुद्धतन्त्रे**—

शिवस्य तु पराशक्तिसहस्रांशसमुद्भवः ।
पराशक्तेः सहस्रांशादादिशक्तिसमुद्भवः ॥
आदिशक्तिसहस्रांशादिच्छाशक्तिसमुद्भवः ।
इच्छाशक्तिसहस्रांशाज्ज्ञानशक्तिसमुद्भवः ॥
ज्ञानशक्तिसहस्रांशात्क्रियाशक्तिसमुद्भव ।

इत्यादिनोक्तानां पराशक्त्यादीनां नामग्रहणम् । देव्याश्च सर्वोत्तमत्वं त्रैपुरेषूपनिषत्कदम्बेषु निवेदयन् देवतायै महत्यै इत्येवासकृद्व्यवहाराच्छिवाद्युत्पादकत्वश्रवणाच्च स्पष्टमेव । कर्मकाण्डेऽपि प्रसङ्गाद्देवतान्तरानुवादप्रसक्तौ सत्यामन्येषां देवानां तत्तदसाधारणसंज्ञयैवानुवादप्रायपाठे 'महत्यै वा एतद्देवतायै रूपं महतीमेव तद्देवतां प्रीणाती' त्यादिव्यवहाराच्च । **रुद्रयामलेऽपि**—

अनेकजन्मपुण्यौघैर्दीक्षितो जायते नरः ।
तत्राप्यनेकभाग्येन शिवविष्णुपरायणः ॥
तत्राप्यनेकपुण्यौघैः शक्तिभावः प्रजायते ।
महोदयेन तत्रापि सुन्दरीभावतां व्रजेत् ॥
तत्रापि च तुरीयाख्या भाग्यैरन्तर्गता भवेत् ।
नामसंकीर्तनं तस्यास्तत्राप्यतिसुदुर्लभम् ॥
यत्र जन्मनि सा नित्या प्रसन्ना नामकीर्तनात् ।
जीवन्मुक्तिर्भवेत्तत्र कर्तव्यं नावशिष्यते ॥

इति । एवं स्मृतिष्वपि—

> ब्रह्मणो हृदयं विष्णुर्विष्णोरपि शिवः स्मृतः ।
> शिवस्य हृदयं संध्या तेनोपास्या द्विजातिभिः ॥

इति कश्यपादिवचनैः कौर्मपाद्मस्कान्दादिनिखिलपुराणेषु च तत्र तत्र देवीक्त ब्रह्माण्डमार्कण्डेयादिपुराणेषु बहुशः शक्तिरहस्यदेवीभागवततृतीयस्कन्धादिषु पर्यन्त सर्वत्र ज्ञानार्णवकुलार्णवादितन्त्रेषु त्वपरिमितया वर्णितमिति तद्वेदितॄणां मिति नेह प्रतन्यते ॥ ३०३ ॥

> तेषु मुख्यं दशविधं नामसाहस्रमुच्यते ।
> रहस्यनामसाहस्रमिदं शस्तं दशस्वपि ॥ ३०४ ॥

तेषु कोटिषु दशविधं 'एते दश स्तवा गङ्गाश्यालका बालरासभा' इ युक्तेः संगृहीतप्रकारदशकवत् । अत्र गङ्गाद्यक्षरदशकं सहस्रनामदशकस्याद्य रूपम् ।

> मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम् ।
> अनापलिङ्गकूस्कं च पुराणानि पृथक्पृथक् ॥

इति देवीभागवतस्थश्लोक इव 'नामैकदेशे नामग्रहण' मिति न्यायसिद्धम् । भकारो ह्रस्व एव । दीर्घपाठस्तु बहुवचनप्रयुक्तः । ततश्च—

> गङ्गा भवानी गायत्री काली लक्ष्मीः सरस्वती ।
> राजराजेश्वरी बाला श्यामला ललिता दश ॥

इति तदर्थः । त्रिपुरसुन्दर्या एव तन्त्रभेदेन सहस्रनामदशकमस्तीत्यप्याहुः । प्रशस्तम् ॥ ३०४ ॥

> तस्मात्संकीर्तयेन्नित्यं कलिदोषनिवृत्तये ।
> मुख्यं श्रीमातृनामेति न जानन्ति विमोहिताः ॥ ३०५ ॥

उपसंहरति—तस्मादिति । कलिप्रयुक्तो दोषः स्वस्वधर्मसमनुष्ठान तस्य निवृत्तयेऽङ्गादिपरिपूर्तये । वैकल्यं च नाङ्गलोप एव अपितु प्रधानलो प्रधानविकलत्वाविशेषात्, कलिप्रयुक्तदोषत्वाविशेषाच्च । सोऽपि च प्राय निकानां सर्वेषां कर्मठंमन्यानामपरिहरणीय एव । देवतोद्देशेन द्रव्यत्याग यागस्य मानससंकल्पविशेषात्मकत्वेनाग्नय इदं न ममेत्यादिस्पष्टतरशब्दा मात्रेण तस्या जायमानत्वात् । एवं संध्यावन्दनपदवाच्यं प्रधानं 'असवादित्यो ति मन्त्रार्थानुसंधानमादित्यावच्छिन्नचैतन्यस्य स्वात्मचैतन्येन सहाभेदभावनार

सर्वेषामपरिहार्यः । नच तेषामङ्गवैगुण्यनिमित्तिकप्रायश्चित्तानुष्ठानेन समाधानम् । अङ्गमात्रलोप एव तेषां विधानात् । प्रधानलोपेतु पुनः करणमेवेति सिद्धान्तात् । इदंतु नामकीर्तनमुभयस्मिन्नपि निमित्ते समाधायकमिति ततोऽप्यस्योत्कर्षः सिद्धः । नन्वेवं सति प्रायश्चित्तशास्त्राणां कर्मकाण्डस्य च वैयर्थ्यमित्याशङ्क्याह—**मुख्येति**। मायामोहितचित्तानामल्पदेवतास्वेव महत्त्वबुद्ध्युदयेन तत्तदुपासनं प्रवृत्तिः 'मायोपनेत्रपरिगूहितनेत्रकस्य लेशो महानिव विभाति यदल्पकोपि' इत्यस्माभिः **शिवस्तवे** कथनात् । ततश्च तादृशचेतोवृत्त्यानन्त्यादन्यैव पुंसो यत्रैव रुचिस्तदुद्देशेनैव तानि शास्त्राणि प्रवृत्तानि । दृश्यते च लोकेऽपि कस्यचित्स्थूले गुरुभूत एवोपाये रुचिः कस्यचिल्लघुभूत एवेति । ततश्च तादृशसमस्तजनानुजिघृक्षया तानि तानि शास्त्राणि भगवत्यैव कृतानीति नानर्थक्यम् । सहस्रनामपाठे प्रणाडिकया रुच्युत्पादकत्वादपि सार्थक्यमिति तु गूढोऽभिसंधिः । लघूपाये सत्यपि गुरूपाये जनानां प्रवृत्तिस्तु तत्तत्कर्मानुसारिव्यामोहादेवेति भावः ॥ ३०५ ॥

> **विष्णुनामपराः केचिच्छिवनामपराः परे ।**
> **न कश्चिदपि लोकेषु ललितानामतत्परः ॥ ३०६ ॥**

श्रौतस्मार्तकर्मस्वेव रतानां बहुजन्मभिस्तादृशकर्मजन्यपुण्यपरिपाकेन विष्णुनामसु प्रीतिर्बहूनां संभवतीत्याशयेनाह- **विष्ण्विति** । तादृशविष्णुनामकीर्तनेन कतिपयैर्जन्मभिः शिवनामस्वपि, कतिपयेषां प्रीतिः संभवतीत्याशयेनाह—**शिवनामपरा** इति । शिवस्य तु द्वित्रिचतुरादिभूमिकाभेदेन बहुविधत्वात्तत्र सतोऽपि परस्परतारतम्यस्य दुरवगाहत्वाद्बहुभिरपि जन्मभिः प्रयत्नत उत्तरां कक्षामधिरूढा अपि मध्य एवावतिष्ठमाना भासन्ते । शिवकक्षेयत्तानिर्णयस्य रहस्यत्वेनाप्रसिद्धत्वात् । अतो बहुतरजन्मभिर्बहुपुण्यसंभारैश्च लभ्यत्वाद्रहस्यतरेषु देवीनामसु प्रीतिर्दुर्लभतरा पर्यवस्यति । अत एवोक्तं **ब्रह्माण्डपुराणे**—

> यस्य नो पश्चिमं जन्म यदि वा शंकरः स्वयम् ।
> तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी ॥

इति । अत्र शंकराणां क्रमेणाभेदानुसंधानरूपोपासनया चरमशंकरतादात्म्यापन्नो यदि वा शंकर इत्यनेन कथ्यते । तादृशी च दशा दुर्लभतरैव याच दुर्लभतरा सा प्रायेणाविद्यमानप्रायैवेत्याशयेनाह— **न कश्चिदपीति** । लोकेषु मनुष्येषु देवेषु दानवादिषु च ॥ ३०६ ॥

> **येनान्यदेवतानाम कीर्तितं जन्मकोटिषु ।**
> **तस्यैव भवति श्रद्धा श्रीदेवीनामकीर्तने ॥ ३०७ ॥**

इदानीं गूहितमभिप्रायं स्फोटयति—**येनेति** । अन्यासां विष्णुरुद्रेश्वरादीनां देवतानां नाम प्रातिस्विकं जन्मकोटिष येन कीर्तितं तस्यैव कक्षाक्रमेणोत्तरोत्तरदेव-

तातादात्म्याच्चरमशिवनादात्म्य पन्नस्यैव विरलतमस्य कस्यचित्पुरुषधौरेयस्य श्रीदेवीनामकीर्तनविषयकश्रद्धाङ्कुरोदयो नान्येषामिति भावः ॥ ३०७ ॥

**चरमे जन्मनि यथा श्रीविद्योपासको भवेत् ।**
**नामसाहस्रपाठश्च तथा चरमजन्मनि ॥ ३०८ ॥**

नन्वीदृशदेवीनामकीर्तनविशिष्टजन्मबाहुल्ये किं प्राप्यमित्याशङ्क्य जन्मान्तरमेवासंभवित्वेन सदृष्टान्तं निरस्यति—**चरम** इति । अस्मिन्नंशे उपमानान्तराभावाद्देवीनाम्नो देवीमन्त्र एवोपमानमित्याशयेन यथाश्रीविद्योपासक इत्युक्तम् । उपासकशब्द उपास्तिपरः । श्रीविद्येति भिन्नपदम् । गुरुदेवतामन्त्रात्मनामैक्यभावनासिद्धिमदभिप्रायेणोपासकपदं तस्या विशेषणम्। तादृश्या एव चरमे जन्मनि लाभात् 'यस्य नो पश्चिमं जन्मे'त्यादि **ब्रह्माण्डपुराण**वचनात् । अथवा नामसहस्रस्य पाठो यस्मिन्निति व्यधिकरणबहुव्रीहिणोत्तरपदमेव वा पाठकपरम् । उपासकपाठयोरुपमानोपमेयतावच्छेदकयोर्मन्त्रनाम्नोरप्युपमानोपमेयभावः फलति ॥ ३०८ ॥

**यथैव विरला लोके श्रीविद्याचारवेदिनः ।**
**तथैव विरलो गुह्यनामसहस्रपाठकः ॥ ३०९ ॥**

श्रीविद्यामन्त्रमात्रलाभो नोपास्तिः तस्य सुलभोपायेन पुस्तकादिनापि संभवात् अपितु तद्विषयकबाह्यान्तरभेदभिन्नयावदाचारपरिज्ञानपूर्वकमनुष्ठानम् । तच्च विरलतरम् । अत एवोक्तं **शक्तिरहस्ये** 'कौलिके गुरवोऽनन्ताः' इति । श्रौतस्मार्ताचारविषयकग्रन्थानां बहूनामुपलम्भेन तद्विषयकयावज्ज्ञानवतामपि पुरुषाणां बहूनां लाभादेकेनैव गुरुणा द्वित्रैर्वा शिष्यमनोरथपूर्तिः। एतदाचारास्तु सामस्त्येन न क्वापि ग्रन्थेषूपनिबध्यन्ते । उपनिबन्धे प्रत्युत योगिनीशापाम्नानात् । अत एवोत्तरचतुःशत्यां 'कर्णात्कर्णोपदेशेन सम्प्राप्तमवनीतल' इत्युक्तं नतु पुस्तकात्पुस्तकान्तरमिति । तस्माद्गुरुमुखेभ्य एव समस्ताचारज्ञानलाभ इति तदाशयः । एतदाशयेनैव—

मधुलुब्धो यथा भृङ्गः पुष्पात्पुष्पान्तरं व्रजेत् ।
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं श्रयेत् ॥

इत्यभ्यनुज्ञा '-पूर्णाभिषेककर्ता यो गुरुस्तस्यैव पादुके'तिव्यवस्था च संगच्छते । ततश्च मन्त्रमात्रस्य विरलत्वेऽपि स नात्रोपमानमपितु यावदाचारवेदनमेव तथा विरलतमत्वादित्याशयेनोक्तमेवार्थं द्रढयति—**यथैवे**ति । विरला विरलतमा इत्यर्थः ॥ ३०९ ॥

**मन्त्रराजजपश्चैव चक्रराजार्चनं तथा ।**
**रहस्यनामपाठश्च नाल्पस्य तपसः फलम् ॥ ३१० ॥**

एवं प्रत्येकं विरलानां त्रयाणामेकत्र मेलनमतीव दुर्लभमिति न्यायसिद्धमेवार्थमाह—मन्त्रेति । अपितु निरवधिकस्येति शेषः । नकारेणवायं समासो नाल्पस्येति नतु नञ् ।। ३१० ।।

अपठन्नामसाहस्रं प्रीणयेद्यो महेश्वरीम ।
स चक्षुषा विना रूपं पश्येदेव विमूढधीः ।। ३११ ।।
रहस्यनामसाहस्रं त्यक्त्वा यः सिद्धिकामुकः ।
स भोजनं विना नूनं क्षुन्निवृत्तिमभीप्सति ।। ३१२ ।।

एवं देवताप्रीतिकरत्वं सर्वकामपूरकत्वं चास्यान्वयमुखेनोक्त्वा व्यतिरेकमुखेन निदर्शनालंकाराभ्यां द्रढयति अपठन्निति द्वाभ्याम् । स्पष्टोऽर्थः ।। ३११।।३१२।।

यो भक्तो ललितादेव्याः स नित्यं कीर्तयेदिदम् ।
नान्यथा प्रीयते देवी कल्पकोटिशतैरपि ।। ३१३ ।।

भक्ततावच्छेदकमप्येतदेवेत्यन्वयव्यतिरेकाभ्यामाह — य इति । यो नित्यं संकीर्तयेत्स एव भक्तो नान्य इत्यर्थः । 'ये यजमानास्त एव ऋत्विज' इत्यत्रेव यत्तदोर्वैपरीत्येनान्वयः ।। ३१३ ।।

तस्माद्रहस्यनामानि श्रीमातुः प्रयतः पठेत् ।
इति ते कथितं स्तोत्रं रहस्यं कुम्भसंभव ।। ३१४ ।।

नामसाहस्रपाठविधिं निगमयंस्तत्फलकथनमुपसंहरति—तस्मादिति । प्रयतः शुचिः ।। ३१४ ।।

नाविद्यावेदिने ब्रूयन्नाभक्ताय कदाचन ।
यथैव गोप्या श्रीविद्या तथा गोप्यमिदं मुने ।। ३१५ ।।

उत्तरत्र संप्रदायप्रवर्तनप्रकारं शिक्षयति—नेति । भक्तायापि विद्यावेदनरहिताय तत्सहितायाप्यभक्ताय न ब्रूयात् । तथा गोप्यं श्रीविद्या यथा तदभाववते न प्रदर्श्यते तथेदं तद्वतेऽपि न प्रदर्श्यं किमुत तदभाववत इति भावः ।। ३१५ ।।

पशुतुल्येषु न ब्रूयाज्जनेषु स्तोत्रमुत्तमम् ।
यो ददाति विमूढात्मा श्रीविद्यारहिताय तु ।। ३१६ ।।

अत एव निषेधत्यर्थेन —पश्विति । पशवश्च द्विविधाः पूर्वमुक्ताः । निषेधोल्लङ्घने दण्डमाह य इति । यश्च गृह्णातीति चकारलभ्योऽर्थः ।। ३१६ ।।

तस्मै कुप्यन्ति योगिन्यः सोऽनर्थः सुमहान्स्मृतः ।
रहस्यनामसाहस्रं तस्मात्संगोपयेदिदम् ।। ३१७ ।।

तस्मै दात्रे विद्यारहिताय ग्रहीत्रे च । 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप' इति संप्रदानसंज्ञा । गोपनीयतामुपसंहरत्यर्धेन—रहस्येति । रहस्येत्यादिविशेष्यं हेतुगर्भम् । तेन परिकराङ्कुरालंकारः । तस्मात् अनधिकारिणोर्दातृग्रहीत्रोरनर्थप्रदत्वात् रहस्यत्वाच्च गोपयेदित्यर्थः ।। ३१७ ।।

**स्वतन्त्रेण मया नोक्तं तवापि कलशीभव ।**
**ललिताप्रेरणादेव मयोक्तं स्तोत्रमुत्तमम् ।। ३१८ ।।**

ननु यद्विद्यावतेऽपि गोप्यं तन्मह्यं त्वया कथं प्रदर्शितमित्याशङ्कमानमगस्त्यं समाधत्ते हयग्रीवः—**स्वतन्त्रेणेति** । स्वतन्त्रेण पराप्रेरितेन। कलशीति जातिलक्षणो ङीष् । तत्प्रयोगश्च श्लेषेण देवीपुत्रबोधनाय । तदप्युपास्तिबलेन देवीपुत्रभावपर्यन्तां पदवीमुपारूढे वात्सल्येन ललिताम्बाप्रेरणावश्यंभावध्वननाय । 'कल शुके कलो जीर्णे कलो नादेऽतिमञ्जुले' इति यादवबलात्कले शुके नादे वा शेत इति कलशी देवी । सर्वोत्तमत्वाद्वा । सर्वोत्तमे चोत्तमाङ्गे कुम्भे च कलशध्वनि'रिति रभसः । ललिताप्रेरणादेव तत्प्रवर्तनाया अनुल्लङ्घनीयत्वात् । अधिकारिविषय एव तत्प्रेरणस्य जायमानत्वाच्च । तेनोपासकाभासायैव न प्रदर्श्यमिति भावः ।। ३१८ ।।

**कीर्तनीयमिदं भक्त्या कुम्भयोने निरन्तरम् ।**
**तेन तुष्टा महादेवी तवाभीष्टं प्रदास्यति ।। ३१९ ।।**

त्वं तु नोपासकाभासोऽपितु पूर्णोऽधिकारीति ध्वननाय प्रवर्तयति—**कीर्तनीयमिति** । त्वयेति शेषः । निरन्तरं अभेदानुसंधानपूर्वकम् । नचात्र नामकीर्तनविधिरसकृच्छ्रूयमाणोऽभ्यासात्कर्माणि भिन्द्यादेवेत्येकस्यैवैतावन्ति फलानीति वर्णनमयुक्तमिति वाच्यम् । भावनाभेदमात्रेणापि तदुपपत्तेः, फलस्यानुपादेयत्वेन तद्विशेषोद्देशेन कर्मण एव पुनःपुनर्विधानेऽप्यन्यपरत्वेन तादृशस्य पुनःश्रवणस्याभ्यासरूपत्वाभावात् । 'अपः प्रणयती'ति विधेरर्थवादवैचित्र्यार्थं षड्वारं श्रवणेऽपि कर्मभेदानङ्गीकारात् । अनुपादेयगुणसाचिव्येऽप्यसंनिधेरभावेन प्रकरणान्तरस्यापि शङ्कितुमयोगाच्चेति दिक् ।। ३१९ ।।

सूत उवाच ।

**इत्युक्त्वा श्रीहयग्रीवो ध्यात्वा श्रीललिताम्बिकाम् ।**
**आनन्दमग्नहृदयः सद्यः पुलकितोऽभवत् ।। ३२० ।।**

'प्रहृष्टो वचनं प्राहे'त्यादिनोपक्रान्तमेकेन श्लोकेनोपसंहरति भगवान्सूतः—**इतीति** । आनन्दे स्वात्मानन्दे मग्नं विषयान्तरसंचाररराहित्येन तदेकप्रवणं हृदयं चित्तं यस्य सः । पुलका आनन्दजन्यरोमाञ्चा अस्य संजाता इति पुलकितः । तारकादित्वादितच् ।। ३२० ।।

इति श्रीब्रह्माण्डपुराणे ललितोपाख्याने हयग्रीवागस्त्यसंवादे
ललितासहस्रनामस्तोत्रं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

अथ परिभाषाद्यां स्वग्रन्थमुपसंहरति—

इति परिभाषामण्डलमुदितं नरसिंहयज्वना विदुषा ।
सत्संप्रदायगमकं शिवभक्तानन्दनाय शिवम् ॥ ४० ॥

मण्डलशब्दश्चत्वारिंशत्संख्यात्मकसमूहपरः । विदुषा विद्याष्टादशकविदा श्रीविद्योपासकेन च शिवयोर्भक्तानां सत्संप्रदायं दुर्लभतरमन्वेषमाणानामानन्दनाय । शिवं मङ्गलरूपमिति सर्वं शिवम् ॥ ४० ॥

इति भास्कररायेण कृते सौभाग्यभास्करे ।
जाता फलश्रुतिः श्लोकैः क्षमाख्या द्वादशी कला ॥ १२ ॥

## ग्रन्थकृत्प्रशस्तिः ।

श्रीविश्वामित्रवंश्यः शिवभजनपरो भारती सोमपीथी
काश्यां गम्भीरराजो बुधमणिरभवद्भास्करस्तस्य सूनुः ।
मोदच्छायामितायां शरदि शरदृताबाश्विने कालयुक्ते
शुक्ले सौम्ये नवम्यामतनुत ललितानामसाहस्रभाष्यम् ॥ १ ॥

श्रुतिस्मृतिन्यायपुराणसूत्रकोशागमश्रीगुरुसंप्रदायात् ।
निश्चित्य निर्मथ्य कृतापि टीका शोध्यैव सद्भिर्मयि हार्दवद्भिः ॥ २ ॥

प्रमादो मेऽवश्यं भवति मतिमान्द्यादलसतः
पदार्थन्यायानामपि दुरवगाहत्वनियमात् ।
परंत्वन्तः सन्तः सदयहृदया नाममहिमा-
प्यपूर्वस्तस्मान्मे न खलु खलपापोभयभयम् ॥ ३ ॥

अम्ब त्वत्पदयोः समर्पितमिदं भाष्यं त्वया कारितं
त्वन्नामार्थविकाशकं तव मुदे भूयादथ त्वां भजन् ।
यो नैनत्परिशीलयेन्न च पठेद्यः पुस्तकस्यापि वा
संग्राहं न करोति तस्य [1]ललिते माभूद्भवत्यां मतिः ॥ ४ ॥

नामैकं मामनयन्नामसहस्राम्बुधेः परं पारम् ।
जलबिन्दुर्भवजलधेर्येषां ते मे जयन्ति गुरुचरणाः ॥ ५ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणसर्वतन्त्रस्वतन्त्र-श्रीमद्गम्भीरराय-
दीक्षितसूरिसूनुना भासुरेत्युपाख्येन भासुरानन्दनाथेतिदीक्षानामशालिना
भास्कररायेण प्रणीतं सौभाग्यभास्कराख्यं ब्रह्माण्डपुराणीय-
श्रीललितारहस्यनामसहस्रभाष्यं संपूर्णम् ।

सम्पूर्णोऽयं ग्रन्थः ।

---

१. 'ललितोपरि तवैषा जायताम्' इति पाठः

# श्रीललितासहस्रनामावलिः

ओं-४ श्रीमात्रे नमः
श्रीमहाराज्ञ्यै
श्रीमत्सिंहासनेश्वर्यै
चिदग्निकुण्डसम्भूतायै
देवकार्यसमुद्यतायै
उद्यद्भानुसहस्राभायै
चतुर्बाहुसमन्वितायै
रागस्वरूपाशाढ्यायै
क्रोधाकाराङ्कुशोज्ज्वलायै
ओं-४ मनोरूपेक्षुकोदण्डायै
ओं-पञ्चतन्मात्रसायकायै
निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डलायै
चम्पकाशोकपुन्नागसौगन्धिकलसत्कचायै
कुरुविन्दमणिश्रेणीकनत्कोटीरमण्डितायै
अष्टमीचन्द्रविभ्राजदलिकस्थलशोभितायै
मुखचन्द्रकलङ्काभमृगनाभिविशेषकायै
वदनस्मरमाङ्गल्यगृहतोरणचिल्लिकायै
वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचनायै
नवचम्पकपुष्पाभनासादण्डविराजितायै
ओं-४ ताराकान्तितिरस्कारिनासाभरण-भासुरायै
ओं-४ कदम्बमञ्जरीक्लृप्तकर्णपूरमनो-हरायै
ताटङ्कयुगलीभूततपनोडुपमण्डलायै
पद्मरागशिलादर्शपरिभाविकपोलभुवे
नवविद्रुमबिम्बश्रीन्यक्कारिदशनच्छदायै
शुद्धविद्याङ्कुराकारद्विजपङ्क्तिद्वयो-ज्ज्वलायै
कर्पूरवीटिकामोदसमाकर्षिदिगन्तरायै
निजसल्लापमाधुर्यविनिर्भर्त्सितकच्छप्यै
मन्दस्मितप्रभापूरमज्जत्कामेशमानसायै
अनाकलितसादृश्यचिबुकविराजितायै

ओं-४ कामेशबद्धमाङ्गल्यसूत्रशोभितकन्ध-रायै
ओं-४ कनकाङ्गदकेयूरकमनीयभुजान्वितायै
रत्नग्रैवेयचिन्ताकलोलमुक्ताफलान्वितायै
कामेश्वरप्रेमरत्नमणिप्रतिपणस्तन्यै
नाभ्यालवालरोमालिलताफलकुचद्वय्यै
लक्ष्यरोमलताधारतासमुन्नेयमध्यमायै
स्तनभारदलन्मध्यपट्टबन्धवलित्रयायै
अरुणारुणकौसुम्भवस्त्रभास्वत्कटीतटयै
रत्नकिङ्किणिकारम्यरशनादामभूषितायै
कामेशज्ञातसौभाग्यमार्दवोरुद्वयान्वितायै
ओं-४ माणिक्यमुकुटाकारजानुद्वयविराजि-तायै
ओं-४ इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घि-कायै
गूढगुल्फायै
कूर्मपृष्ठजयिष्णुप्रपदान्वितायै
नखदीधितिसञ्छन्ननमज्जनतमोगुणायै
पदद्वयप्रभाजालपराकृतसरोरुहायै
सिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्बु-जायै
मरालीमन्दगमनायै
महालावण्यशेवधये
सर्वारुणायै
ओं-४ अनवद्याङ्ग्यै
ओं-४ सर्वाभरणभूषितायै
शिवकामेश्वराङ्कस्थायै
शिवायै
स्वाधीनवल्लभायै
सुमेरुशृङ्गमध्यस्थायै
श्रीमन्नगरनायिकायै
चिन्तामणिगृहान्तस्थायै

पञ्चब्रह्मासनस्थितायै
महापद्माटवीसंस्थायै
ओं-४ कदम्बवनवासिन्यै
ओं-४ सुधासागरमध्यस्थायै
कामाक्ष्यै
कामदायिन्यै
देवर्षिगणसङ्घातस्तूयमानात्मवैभवायै
भण्डासुरवधोद्युक्तशक्तिसेनासमन्वितायै
सम्पत्करीसमारूढसिन्धुरव्रजसेवितायै
अश्वारूढाधिष्ठिताश्वकोटिकोटिभिरावृतायै
चक्रराजरथारूढसर्वायुधपरिष्कृतायै
गेयचक्ररथारूढमन्त्रिणीपरिसेवितायै
ओं-४ किरिचक्ररथारूढदण्डनाथपुरस्कृतायै
ओं-४ ज्वालामालिनिकाक्षिप्तवह्निप्राकारमध्यगायै
भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षितायै
नित्यापराक्रमाटोपनिरीक्षणसमुत्सुकायै
भण्डपुत्रवधोद्युक्तबालाविक्रमनन्दितायै
मन्त्रिण्यम्बाविरचितविषङ्गवधतोषितायै
विशुक्रप्राणहरणवाराहीवीर्यनन्दितायै
कामेश्वरमुखालोककल्पितश्रीगणेश्वरायै
महागणेशनिर्भिन्नविघ्नयन्त्रप्रहर्षितायै
भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिण्यै
ओं-४ कराङ्गुलिनखोत्पन्ननारायणदशाकृतये
ओं-४ महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिकायै
कामेश्वरास्त्रनिर्दग्धभण्डासुरशून्यकायै
ब्रह्मोपेन्द्रमहेन्द्रादिदेवसंस्तुतवैभवायै
हरनेत्राग्निसन्दग्धकामसञ्जीवनौषधये
श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजायै
कण्ठाधःकटिपर्यन्तमध्यकूटस्वरूपिण्यै

मूलमन्त्रात्मिकायै
मूलकूटत्रयकलेबरायै
ओं-४ कुलामृतैकरसिकायै
ओं-४ कुलसङ्केतपालिन्यै
कुलाङ्गनायै
कुलान्तस्स्थायै
कौलिन्यै
कुलयोगिन्यै
अकुलायै
समयान्तस्स्थायै
समयाचारतत्परायै
मूलाधारैकनिलयायै
ओं- ब्रह्मग्रन्थिविभेदिन्यै
ओं- मणिपूरान्तरुदितायै
विष्णुग्रन्थिविभेदिन्यै
आज्ञाचक्रान्तरालस्थायै
रुद्रग्रन्थिविभेदिन्यै
सहस्राराम्बुजारूढायै
सुधासाराभिवर्षिण्यै
तटिल्लतासमरुच्यै
षट्चक्रोपरिसंस्थितायै
महासक्त्यै
ओं-४ कुण्डलिन्यै
ओं-४ बिसतन्तुतनीयस्यै
भवान्यै
भावनागम्यायै
भवारण्यकुठारिकायै
भद्रप्रियायै
भद्रमूर्तये
भक्तसौभाग्यदायिन्यै
भक्तिप्रियायै
भक्तिगम्यायै
ओं-४ भक्तिवश्यायै

शाम्भव्यै
शारदाराध्यायै
शर्वाण्यै
शर्मदायिन्यै
शाङ्कर्यै
श्रीकर्यै
साध्व्यै
शरच्चन्द्रनिभाननायै
ओं-४ शातोदर्यै
ओं-४ शान्तिमत्यै
निराधारायै
निरञ्जनायै
निर्लेपायै
निर्मलायै
नित्यायै
निराकारायै
निराकुलायै
निर्गुणायै
ओं-४ निष्कलायै
ओं-४ शान्तायै
निष्कामायै
निरुपप्लवायै
नित्यमुक्तायै
निर्विकारायै
निष्प्रपञ्चायै
निराश्रयायै
नित्यशुद्धायै
नित्यबुद्धायै
ओं-४ निरवद्यायै
ओं-४ निरन्तरायै
निष्कारणायै
निष्कलङ्कायै
निरीश्वरायै

रागमथन्यै
निर्मदायै
मदनाशिन्यै
ओं-४ निश्चिन्तायै
ओं-४ निरहङ्कारायै
निर्मोहायै
मोहनाशिन्यै
निर्ममायै
ममताहन्त्र्यै
निष्पापायै
पापनाशिन्यै
निष्क्रोधायै
क्रोधशमन्यै
ओं-४ निर्लोभायै
ओं-४ लोभनाशिन्यै
निस्संशयायै
संशयघ्न्यै
निर्भवायै
भवनाशिन्यै
निर्विकल्पायै
निराबाधायै
निर्भेदायै
भेदनाशिन्यै
ओं-४ निर्नाशायै
ओं-४ मृत्युमथन्यै
निष्क्रियायै
निष्परिग्रहायै
निस्तुलायै
नीलचिकुरायै
निरपायायै
निरत्ययायै
दुर्लभायै
दुर्गमायै

ओं-४ दुःखहन्त्र्यै
सुखप्रदायै
दुष्टदूरायै
दुराचारशमन्यै
दोषवर्जितायै
सर्वज्ञायै
सान्द्रकरुणायै
समानाधिकवर्जितायै
सर्वशक्तिमय्यै
ओं-४ सर्वमङ्गलायै
ओं-४ सद्गतिप्रदायै
सर्वेश्वर्यै
सर्वमय्यै
सर्वमन्त्रस्वरूपिण्यै
सर्वयन्त्रात्मिकायै
सर्वतन्त्ररूपायै
मनोन्मन्यै
माहेश्वर्यै
महादेव्यै
ओं-४ महालक्ष्म्यै
ओं-४ मृडप्रियायै
महारूपायै
महापूज्यायै
महापातकनाशिन्यै
महामायायै
महासत्त्वायै
महाशक्त्यै
महारत्यै
महाभोगायै
ओं-४ महैश्वर्यायै
ओं-४ महावीर्यायै
महाबलायै
महाबुद्ध्यै
महासिद्ध्यै

महायोगेश्वरेश्वर्यै
महातन्त्रायै
महामन्त्रायै
महायन्त्रायै
महासनायै
ओं-४ महायागक्रमाराध्यायै
ओं-४ महाभैरवपूजितायै
महेश्वरमहाकल्पमहाताण्डवसाक्षिण्यै
महाकामेशमहिष्यै
२०० महात्रिपुरसुन्दर्यै
चतुष्षष्ट्युपचाराढ्यायै
चतुष्षष्टिकलामय्यै
महाचतुष्षष्टिकोटियोगिनीगणसेवित
मनुविद्यायै
चन्द्रविद्यायै
ओं-४ चन्द्रमण्डलमध्यगायै
ओं-४ चारुरूपायै
चारुहासायै
चारुचन्द्रकलाधरायै
चराचरजगन्नाथायै
चक्रराजनिकेतनायै
पार्वत्यै
पद्मनयनायै
पद्मरागसमप्रभायै
पञ्चप्रेतासनासीनायै
ओं-४ पञ्चब्रह्मस्वरूपिण्यै
ओं-४ चिन्मय्यै
परमानन्दायै
विज्ञानघनरूपिण्यै
ध्यानध्यातृध्येयरूपायै
धर्माधर्मविवर्जितायै
विश्वरूपायै
जागरिण्यै
स्वपन्त्यै

तैजसात्मिकायै
ओं-४ सुप्तायै
ओं-४ प्राज्ञात्मिकायै
तुर्यायै
सर्वावस्थाविवर्जितायै
सृष्टिकर्त्र्यै
ब्रह्मरूपायै
गोप्त्र्यै
गोविन्दरूपिण्यै
संहारिण्यै
रुद्ररूपायै
ओं-तिरोधानकर्यै
ओं-ईश्वर्यै
सदाशिवायै
अनुग्रहदायै
पञ्चकृत्यपरायणायै
भानुमण्डलमध्यस्थायै
भैरव्यै
भगमालिन्यै
पद्मासनायै
भगवत्यै
ओं-पद्मनाभसहोदर्यै
ओं-उन्मेषनिमिषोत्पन्नभुवनावल्यै
सहस्रशीर्षवदनायै
सहस्राक्ष्यै
सहस्रपदे
आब्रह्मकीटजनन्यै
वर्णाश्रमविधायिन्यै
निजाज्ञारूपनिगमायै
पुण्यापुण्यफलप्रदायै
श्रुतिसीमन्तसिन्दूरीकृतपादाब्जधूलिकायै
ओं-४ सकलागमसन्दोहशुक्तिसम्पुट-
मौक्तिकायै
ओं-४ पुरुषार्थप्रदायै

पूर्णायै
भोगिन्यै
भुवनेश्वर्यै
अम्बिकायै
अनादिनिधनायै
हरिब्रह्मेन्द्रसेवितायै
नारायण्यै
नादरूपायै
ओं-४ नामरूपविवर्जितायै २
ओं-४ ह्रीङ्कार्यै
ह्रीमत्यै
हृद्यायै
हेयोपादेयवर्जितायै
राजराजार्चितायै
राज्ञ्यै
रम्यायै
राजीवलोचनायै
रञ्जन्यै
ओं-४ रमण्यै
ओं-४ रस्यायै
रणत्किङ्किणिमेखलायै
रमायै
राकेन्दुवदनायै
रतिरूपायै
रतिप्रियायै
रक्षाकर्यै
राक्षसघ्न्यै
रामायै
ओं-४ रमणलम्पटायै
ओं-४ काम्यायै
कामकलारूपायै
कदम्बकुसुमप्रियायै
कल्याण्यै
जगतीकन्दायै

करुणारससागरायै
कलावत्यै
कलालापायै
कान्तायै
ओं-४ कादम्बरीप्रियायै
ओं-४ वरदायै
वामनयनायै
वारुणीमदविह्वलायै
विश्वाधिकायै
वेदवेद्यायै
विन्ध्याचलनिवासिन्यै
विधात्र्यै
वेदजनन्यै
विष्णुमायायै
ओं-४ विलासिन्यै
ओं-४ क्षेत्रस्वरूपायै
क्षेत्रेश्यै
क्षेत्रक्षेत्रज्ञपालिन्यै
क्षयवृद्धिविनिर्मुक्तायै
क्षेत्रपालसमर्चितायै
विजयायै
विमलायै
वन्द्यायै
वन्दारुजनवत्सलायै
ओं-४ वाग्वादिन्यै
ओं-४ वामकेश्यै
वह्निमण्डलवासिन्यै
भक्तिमत्कल्पलतिकायै
पशुपाशविमोचिन्यै
संहृताशेषपाखण्डायै
सदाचारप्रवर्तिकायै
तापत्रयाग्निसन्तप्तसमाह्लादनचन्द्रिकायै
तरुण्यै

ओं-४ तनुमध्यायै
ओं-४ तमोपहायै
चित्यै
तत्पदलक्ष्यार्थायै
चिदेकरसरूपिण्यै
स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्तत्यै
परायै
प्रत्यक्चितीरूपायै
पश्यन्त्यै
परदेवतायै
ओं-४ मध्यमायै
ओं-४ वैखरीरूपायै
भक्तमानसहंसिकायै
कामेश्वरप्राणनाड्यै
कृतज्ञायै
कामपूजितायै
शृङ्गाररससम्पूर्णायै
जयायै
जालन्धरस्थितायै
ओड्याणपीठनिलयायै
ओं-४ बिन्दुमण्डलवासिन्यै
ओं-४ रहोयागक्रमाराध्यायै
रहस्तर्पणतर्पितायै
सद्यःप्रसादिन्यै
विश्वसाक्षिण्यै
साक्षिवर्जितायै
षडङ्गदेवतायुक्तायै
षाड्गुण्यपरिपूरितायै
नित्यक्लिन्नायै
ओं-४ निरुपमायै
निर्वाणसुखदायिन्यै
ओं-४ नित्याषोडशिकारूपायै
श्रीकण्ठार्धशरीरिण्यै

प्रभारूपायै
प्रसिद्धायै
परमेश्वर्यै
मूलप्रकृत्यै
अव्यक्तायै
व्यक्ताव्यक्तस्वरूपिण्यै
ओं-४ व्यापिन्यै ४००
ओं-४ विविधाकारायै
विद्याविद्यास्वरूपिण्यै
महाकामेशनयनकुमुदाह्लादकौमुद्यै
भक्तहार्दतमोभेदभानुमद्भानुसन्तत्यै
शिवदूत्यै
शिवाराध्यायै
शिवमूर्त्यै
शिवङ्कर्यै
शिवप्रियायै
ओं-४ शिवपरायै
ओं-४ शिष्टेष्टायै
शिष्टपूजितायै
अप्रमेयायै
स्वप्रकाशायै
मनोवाचामगोचरायै
चिच्छक्त्यै
चेतनारूपायै
जडशक्त्यै
जडात्मिकायै
ओं-४ गायत्र्यै
ओं-४ व्याहृत्यै
सन्ध्यायै
द्विजबृन्दनिषेवितायै
तत्त्वासनायै
तस्मै
तस्मा

पञ्चकोशान्तरस्थितायै
निस्सीममहिम्ने
ओं-४ नित्ययौवनायै
मदशालिन्यै
मदाघूर्णितरक्ताक्ष्यै
मदपाटलगण्डभुवे
चन्दनद्रवदिग्धाङ्ग्यै
चाम्पेयकुसुमप्रियायै
कुशलायै
कोमलाकारायै
कुरुकुल्लायै
कुलेश्वर्यै
ओं-४ कुलकुण्डालयायै
ओं-४ कौलमार्गतत्परसेवितायै
कुमारगणनाथाम्बायै
तुष्ट्यै
पुष्ट्यै
मत्यै
धृत्यै
शान्त्यै
स्वस्तिमत्यै
कान्त्यै
ओं-४ नन्दिन्यै
ओं-४ विघ्ननाशिन्यै
तेजोवत्यै
त्रिनयनायै
लोलाक्षीकामरूपिण्यै
मालिन्यै
हंसिन्यै
मात्रे
मलयाचलवासिन्यै
सुमुख्यै
ओं-४ नलिन्यै

शोभनायै
सुरनायिकायै
कालकण्ठ्यै
कान्तिमत्यै
क्षोभिण्यै
सूक्ष्मरूपिण्यै
वज्रेश्वर्यै
वामदेव्यै
ओं-४ वयोवस्थाविवर्जितायै
ओं-४ सिद्धेश्वर्यै
सिद्धविद्यायै
सिद्धमात्रे
यशस्विन्यै
विशुद्धिचक्रनिलयायै
आरक्तवर्णायै
त्रिलोचनायै
खट्वाङ्गादिप्रहरणायै
वदनैकसमन्वितायै
ओं-४ पायसान्नप्रियायै
ओं-४ त्वक्स्थायै
पशुलोकभयङ्कर्यै
अमृतादिमहाशक्तिसंवृतायै
डाकिनीश्वर्यै
अनाहताब्जनिलयायै
श्यामाभायै
वदनद्वयायै
दंष्ट्रोज्ज्वलायै
अक्षमालादिधरायै
ओं-४ रुधिरसंस्थितायै
ओं-४ कालरात्र्यादिशक्त्यौघवृतायै
स्निग्धौदनप्रियायै
महावीरेन्द्रवरदायै
राकिण्यम्बास्वरूपिण्यै
मणिपुराब्जनिलयायै
वदनत्रयसंयुतायै
वज्रादिकायुधोपेतायै
डामर्यादिभिरावृतायै
रक्तवर्णायै
ओं-४ मांसनिष्ठायै
ओं-४ गुडान्नप्रीतमानसायै
समस्तभक्तसुखदायै
लाकिन्यम्बास्वरूपिण्यै
स्वाधिष्ठानाम्बुजगतायै
चतुर्वक्त्रमनोहरायै
शूलाद्यायुधसम्पन्नायै
पीतवर्णायै
अतिगर्वितायै
मेदोनिष्ठायै
ओं-४ मधुप्रीतायै
ओं-४ बन्धिन्यादिसमन्वितायै
दध्यन्नासक्तहृदयायै
काकिनीरूपधारिण्यै
मूलाधाराम्बुजारूढायै
पञ्चवक्त्रायै
अस्थिसंस्थितायै
अङ्कुशादिप्रहरणायै
वरदादिनिषेवितायै
मुद्गौदनासक्तचित्ताय
ओं-४ साकिन्यम्बास्वरूपिण्यै
ओं-४ आज्ञाचक्राब्जनिलयायै
शुक्लवर्णायै
षडाननायै
मज्जासंस्थायै
हंसवतीमुख्यशक्तिसमन्वितायै
हरिद्रान्नैकरसिकायै
हाकिनीरूपधारिण्यै
सहस्रदलपद्मस्थायै
सर्ववर्णोपशोभितायै

ओं-४ सर्वायुधधरायै
ओं-४ शुक्लसंस्थितायै
सर्वतोमुख्यै
सर्वौदनप्रीतचित्तायै
याकिन्यम्बास्वरूपिण्यै
स्वाहायै
स्वधायै
अमत्यै
मेधायै
श्रुत्यै
ओं-४ स्मृत्यै
ओं-४ अनुत्तमायै
पुण्यकीर्त्यै
पुण्यलभ्यायै
पुण्यश्रवणकीर्तनायै
पुलोमजार्चितायै
बन्धमोचन्यै
बन्धुरालकायै[1]
विमर्शरूपिण्यै
विद्यायै
वियदादिजगत्प्रसुवे
ओं- सर्वव्याधिप्रशमन्यै
सर्वमृत्युनिवारिण्यै
अग्रगण्यायै
अचिन्त्यरूपायै
कलिकल्मषनाशिन्यै
कात्यायन्यै
कालहन्त्र्यै
कमलाक्षनिषेवितायै
ताम्बूलपूरितमुख्यै
ओं-४ दाडिमीकुसुमप्रभायै

ओं-४ मृगाक्ष्यै
मोहिन्यै
मुख्यायै
मृडान्यै
मित्ररूपिण्यै
नित्यतृप्तायै
भक्तनिध्यै
नियन्त्र्यै
निखिलेश्वर्यै
ओं-४ मैत्र्यादिवासनालभ्यायै
ओं-४ महाप्रलयसाक्षिण्यै
पराशक्त्यै[2]
परानिष्ठायै[3]
प्रज्ञानघनरूपिण्यै
माध्वीपानालसायै
मत्तायै
मातृकावर्णरूपिण्यै
महाकैलासनिलयायै
मृणालमृदुदोर्लतायै
ओं-४ महनीयायै
ओं-४ दयामूर्त्यै
महासाम्राज्यशालिन्यै
आत्मविद्यायै
महाविद्यायै
श्रीविद्यायै
कामसेवितायै
श्रीषोडशाक्षरीविद्यायै
त्रिकूटायै
कामकोटिकायै
कटाक्षकिङ्करीभूतकमलाकोटिसेवि
ओं-४ शिरस्थितायै
चन्द्रनिभायै

भालस्थायै
इन्द्रधनुःप्रभायै
हृदयस्थायै
रविप्रख्यायै
त्रिकोणान्तरदीपिकायै
दाक्षायण्यै
दैत्यहन्त्र्यै
ओं-४ दक्षयज्ञविनाशिन्यै ६००
ओं-४ दरान्दोलितदीर्घाक्ष्यै
दरहासोज्ज्वलन्मुख्यै
गुरुमूर्त्यै
गुणनिधये
गोमात्रे
गुहजन्मभुवे
देवेश्यै
दण्डनीतिस्थायै
दहराकाशरूपिण्यै
ओं-४ प्रतिपन्मुख्यराकान्ततिथिमण्डल-पूजितायै
ओं-४ कलात्मिकायै
कलानाथायै
काव्यालापविनोदिन्यै
सचामररमावाणीसव्यदक्षिणसेवितायै
आदिशक्त्यै
अमेयायै
आत्मने
परमायै
पावनाकृत्यै
ओं-४ अनेककोटिब्रह्माण्डजनन्यै
ओं- दिव्यविग्रहायै
क्लीङ्कार्यै
केवलायै
गुह्यायै

त्रिपुरायै
त्रिजगद्वन्द्यायै
त्रिमूर्त्यै
त्रिदशेश्वर्यै
ओं-४ त्र्यक्षर्यै
ओं-४ दिव्यगन्धाढ्यायै
सिन्दूरतिलकाञ्चितायै
उमायै
शैलेन्द्रतनयायै
गौर्यै
गन्धर्वसेवितायै
विश्वगर्भायै
स्वर्णगर्भायै
अवरदायै
ओं-४ वागधीश्वर्यै
ओं-४ ध्यानगम्यायै
अपरिच्छेद्यायै
ज्ञानदायै
ज्ञानविग्रहायै
सर्ववेदान्तसंवेद्यायै
सत्यानन्दस्वरूपिण्यै
लोपामुद्रार्चितायै
लीलाक्लृप्तब्रह्माण्डमण्डलायै
अदृश्यायै
ओं-४ दृश्यरहितायै
ओं-४ विज्ञात्र्यै
वेद्यवर्जितायै
योगिन्यै
योगदायै
योग्यायै
योगानन्दायै
युगन्धरायै
इच्छाशक्तिज्ञानशक्तिक्रियाशक्ति-

सर्वाधारायै
ओं-४ सुप्रतिष्ठायै
ओं-४ सदसद्रूपधारिण्यै
अष्टमूर्तये
अजाजैत्र्यै
लोकयात्राविधायिन्यै
एकाकिन्यै
भूमरूपायै
निर्द्वैतायै
द्वैतवर्जितायै
अन्नदायै
ओं-४ वसुधायै
ओं-४ वृद्धायै
ब्रह्मात्मैक्यस्वरूपिण्यै
बृहत्यै
ब्राह्मण्यै
ब्राह्म्यै
ब्रह्मानन्दायै
बलिप्रियायै
भाषारूपायै
बृहत्सेनायै
ओं-४ भावाभावविवर्जितायै
ओं-४ सुखाराध्यायै
शुभकर्यै
शोभनासुलभागत्यै[1]
राजराजेश्वर्यै
राज्यदायिन्यै
राज्यवल्लभायै
राजत्कृपायै
राजपीठनिवेशितनिजाश्रितायै
राज्यलक्ष्म्यै
ओं-४ कोशनाथायै
ओं-४ चतुरङ्गबलेश्वर्यै
साम्राज्यदायिन्यै
सत्यसन्धायै
सागरमेखलायै
दीक्षितायै
दैत्यशमन्यै
सर्वलोकवशङ्कर्यै
सर्वार्थदात्र्यै
सावित्र्यै
ओं-४ सच्चिदानन्दरूपिण्यै
ओं-४ देशकालापरिच्छिन्नायै
सर्वगायै
सर्वमोहिन्यै
सरस्वत्यै
शास्त्रमय्यै
गुहाम्बायै
गुह्यरूपिण्यै
सर्वोपाधिविनिर्मुक्तायै
सदाशिवपतिव्रतायै
ओं-४ सम्प्रदायेश्वर्यै
ओं-४ साधुने
गुरुमण्डलरूपिण्यै
कुलोत्तीर्णायै
भगाराध्यायै
मायायै
मधुमत्यै
मह्यै
गणाम्बायै
ओं-४ गुह्यकाराध्यायै
ओं-४ कोमलाङ्ग्यै
गुरुप्रियायै
स्वतन्त्रायै

1. शोभनायै गतये; सुलभायै गतये

सर्वतन्त्रेश्यै
दक्षिणामूर्तिरूपिण्यै
सनकादिसमाराध्यायै
शिवज्ञानप्रदायिन्यै
चित्कलायै
आनन्दकलिकायै
प्रेमरूपायै
ओं- प्रियङ्कर्यै
नामपारायणप्रीतायै
नन्दिविद्यायै
नटेश्वर्यै
मिथ्याजगदधिष्ठानायै
मुक्तिदायै
मुक्तिरूपिण्यै
लास्यप्रियायै
लयकर्यै
ओं-४ लज्जायै
ओं-४ रम्भादिवन्दितायै
भवदावसुधावृष्ट्यै
पापारण्यदवानलायै
दौर्भाग्यतूलवातूलायै
जराध्वान्तरविप्रभायै
भाग्याब्धिचन्द्रिकायै
भक्तचित्तकेकिघनाघनायै
रोगपर्वतदम्भोलये
मृत्युदारुकुठारिकायै
ओं-४ महेश्वर्यै
ओं-४ महाकाल्यै
महाग्रासायै
महाशनायै
अपर्णायै
चण्डिकायै
चण्डमुण्डासुरनिषूदिन्यै
क्षराक्षरात्मिकायै
सर्वलोकेश्यै
विश्वधारिण्यै
ओं-४ त्रिवर्गदात्र्यै
ओं-४ सुभगायै
त्र्यम्बकायै
त्रिगुणात्मिकायै
स्वर्गापवर्गदायै
शुद्धायै
जपापुष्पनिभाकृत्यै
ओजोवत्यै
द्युतिधरायै
यज्ञरूपायै
ओं- प्रियव्रतायै
ओं-४ दुराराध्यायै
दुराधर्षायै
पाटलीकुसुमप्रियायै
महत्यै
मेरुनिलयायै
मन्दारकुसुमप्रियायै
वीराराध्यायै
विराड्रूपायै
विरजसे
ओं-४ विश्वतोमुख्यै
ओं ४ प्रत्यग्रूपायै
पराकाशायै
प्राणदायै
प्राणरूपिण्यै
मार्ताण्डभैरवाराध्यायै
मन्त्रिणीन्यस्तराज्यधुरे
त्रिपुरेश्यै

जयत्सेनायै
निस्त्रैगुण्यायै
ओं-४ परापरायै
ओं-४ सत्यज्ञानानन्दरूपायै
सामरस्यपरायणायै
कपर्दिन्यै
कलामालायै
कामदुघे
कामरूपिण्यै
कलानिधये
काव्यकलायै
रसज्ञायै
ओं-४ रसशेवधये
ओं-४ पुष्टायै
पुरातनाय
पूज्यायै
पुष्करायै
पुष्करेक्षण्यै
परञ्ज्योतिषे[1]
परंधाम्ने[2]
परमाणवे
परात्परायै
ओं-४ पाशहस्तायै
ओं-४ पाशहन्त्र्यै
परमन्त्रविभेदिन्यै
मूर्तायै
अमूर्तायै
अनित्यतृप्तायै
मुनिमानसहंसिकायै
सत्यव्रतायै
सत्यरूपायै

८००

सर्वान्तर्यामिन्यै[3]
ओं- सत्यै
ओं ब्रह्माण्यै
ब्रह्मणे[4]
जनन्यै[5]
बहुरूपायै
बुधार्चितायै
प्रसवित्र्यै
प्रचण्डायै[6]
आज्ञायै[7]
प्रतिष्ठायै
ओं-४ प्रकटाकृत्यै
ओं४ प्राणेश्वर्यै
प्राणदात्र्यै
पञ्चाशत्पीठरूपिण्यै
विशृङ्खलायै
विविक्तस्थायै
वीरमात्रे
वियत्प्रसुवे
मुकुन्दायै
मुक्तिनिलयायै
ओं-४ मूलविग्रहरूपिण्यै
ओं-४ भावज्ञायै
भवरोगघ्न्यै
भवचक्रप्रवर्तिन्यै
छन्दस्सारायै
शास्त्रसारायै
मन्त्रसारायै
तलोदर्यै
उदारकीर्तये
उद्दामवैभवायै

---

1. परस्मै ज्योतिषे 2. परस्मै धाम्ने 3. सर्वस्यै अन्तर्यामिन्यै
4. ब्रह्मजनन्यै 5. प्रचण्डाज्ञायै

ओं-४ वर्णरूपिण्यै
जन्ममृत्युजरातप्तजनविश्रान्तिदायिन्यै
सर्वोपनिषदुद्घुष्टायै
शान्त्यतीतकलात्मिकायै
गम्भीरायै
गगनान्तस्स्थायै
गर्वितायै
गानलोलुपायै
कल्पनारहितायै
काष्ठायै
ओं-४ अकान्तायै
ओं-४ कान्तार्धविग्रहायै
कार्यकारणनिर्मुक्तायै
कामकेलितरङ्गितायै
कनत्कनकताटङ्कायै
लीलाविग्रहधारिण्यै
अजायै
क्षयविनिर्मुक्तायै
मुग्धायै
क्षिप्रप्रसादिन्यै
ओं-४ अन्तर्मुखसमाराध्यायै
ओं-४ बहिर्मुखसुदुर्लभायै
त्रय्यै
त्रिवर्गनिलयायै
त्रिस्थायै
त्रिपुरमालिन्यै
निरामयायै
निरालम्बायै
स्वात्मारामायै
सुधासृत्यै
ओं-४ संसारपङ्कनिर्मग्नसमुद्धरणपण्डितायै
ओं-४ यज्ञप्रियायै
यज्ञकर्त्र्यै
यजमानस्वरूपिण्यै
धर्माधारायै
धनाध्यक्षायै
धनधान्यविवर्धिन्यै
विप्रप्रियायै

विप्ररूपायै
विश्वभ्रमणकारिण्यै
ओं-४ विश्वग्रासायै
ओं-४ विद्रुमाभायै
वैष्णव्यै
विष्णुरूपिण्यै
अयोनये
योनिनिलयायै
कूटस्थायै
कुलरूपिण्यै
वीरगोष्ठीप्रियायै
वीरायै
ओं-४ नैष्कर्म्यायै
ओं-४ नादरूपिण्यै
विज्ञानकलनायै
कल्यायै
विदग्धायै
बैन्दवासनायै
तत्त्वाधिकायै
तत्त्वमय्यै
तत्त्वमर्थस्वरूपिण्यै
सामगानप्रियायै
ओं-४ सौम्यायै
ओं-४ सदाशिवकुटुम्बिन्यै
सव्यापसव्यमार्गस्थायै
सर्वापद्विनिवारिण्यै
स्वस्थायै
स्वभावमधुरायै
धीरायै
धीरसमर्चितायै
चैतन्यार्घ्यसमाराध्यायै
चैतन्यकुसुमप्रियायै
ओं-४ सदोदितायै
ओं-४ सदातुष्टायै
तरुणादित्यपाटलायै
दक्षिणादक्षिणाराध्यायै
दरस्मेरमुखाम्बुजायै
कौलिनीकेवलायै
अनर्घ्यकैवल्यपददायिन्यै

स्तोत्रप्रियायै
स्तुतिमत्यै
श्रुतिसंस्तुतवैभवायै
ओं-४ मनस्विन्यै
ओं-४ मानवत्यै
महेश्यै
मङ्गलाकृतये
विश्वमात्रे
जगद्धात्र्यै
विशालाक्ष्यै
विरागिण्यै
प्रगल्भायै
परमोदारायै
ओं-४ परामोदायै
ओं-४ मनोमय्यै
व्योमकेश्यै
विमानस्थायै
वज्रिण्यै
वामकेश्वर्यै
पञ्चयज्ञप्रियायै
पञ्चप्रेतमञ्चाधिशायिन्यै
पञ्चम्यै
पञ्चभूतेश्यै
ओं-४ पञ्चसंख्योपचारिण्यै
ओं-४ शाश्वत्यै
शाश्वतैश्वर्यायै[1]
शर्मदायै
शम्भुमोहिन्यै
धरायै[2]
धरसुतायै[2]
धन्यायै
धर्मिण्यै
धर्मवर्धिन्यै
ओं-४ लोकातीतायै
ओं-४ गुणातीतायै
सर्वातीतायै
शमात्मिकायै
बन्धूककुसुमप्रख्यायै
बालायै
लीलाविनोदिन्यै
सुमङ्गल्यै
सुखकर्यै
सुवेषाढ्यायै
ओं-४ सुवासिन्यै
ओं-४ सुवासिन्यर्चनप्रीतायै
आशोभनायै
शुद्धमानसायै
बिन्दुतर्पणसन्तुष्टायै
पूर्वजायै
त्रिपुराम्बिकायै
दशमुद्रासमाराध्यायै
त्रिपुराश्रीवशङ्कर्यै
ज्ञानमुद्रायै
ओं-४ ज्ञानगम्यायै
ओं-४ ज्ञानज्ञेयस्वरूपिण्यै
योनिमुद्रायै
त्रिखण्डेश्यै
त्रिगुणायै
अम्बायै
त्रिकोणगायै
अनघायै
अद्भुतचारित्रायै
वाञ्छितार्थप्रदायिन्यै
ओं-४ अभ्यासातिशयज्ञातायै
ओं-४ षडध्वातीतरूपिण्यै
अव्याजकरुणामूर्तये
अज्ञानध्वान्तदीपिकायै
आबालगोपविदितायै
सर्वानुल्लङ्घ्यशासनायै
श्रीचक्रराजनिलयायै
श्रीमत्त्रिपुरसुन्दर्यै
श्रीशिवायै
शिवशक्त्यैक्यरूपिण्यै
ओं-४ ललिताम्बिकायै

---

1. ईशाश्वतैश्वर्य 2, धराधरसुता